श्रीमज्जैनसिद्धान्तवाचनाप्रकाशनकारिका

# श्रीमती आगमोदयसमितिः

स्थापना—श्रीमद्धीतीर्थे २४४१ माघशुक्लदशम्या

वीरसवत् २४४७ श्रावणशुक्लप्रतिपदा । शास्त्र सर्वत्रग चक्षुः, सर्वज्ञानशिरोमणिः । विक्रमसवत् १९७७ क्राइष्टसन १९२१

# श्रीसिद्धप्रभा-व्याकरणम्

श्रीसिद्धहैमशब्दानुशासनानुगतं ( उणादिसूत्रन्यायधात्त्वकारादिक्रमयुतं )

प्र.शिका—कर्पटवाणिज्यश्रेष्ठि--मीठाभाइकल्याणचंदनाम्न्या श्रीसंघसंस्थया समर्पितद्रव्येण मालवदेशान्तर्गतश्रीरत्नपुरीयश्रीऋषभदेवजी केशरीमलजीनाम्नी श्रीश्वेतांबरसंस्था ।

मुद्रयिता—इन्दौरनगरे श्रीजैनबन्धुमुद्रणालयाधिपः श्रेष्ठि जुहारमल मिश्रीलाल पालरेचा

वीर संवत् २४६०  विक्रम संवत् १९९०  क्राइस्ट १९३४  प्रतयः २५०  पण्यं २—८—०

सर्वेऽधिकाराः स्वायत्ताः स्थापिताः । प्राप्तिस्थानं—सुरत जैनानन्द पुस्तकालय गोपीपुरा.

# उपक्रमः

सर्वेषां शेमुषीमतां विदितचरमेतद् यदुत सर्वाऽपि भाषा विना व्यवस्थां व्यवहर्तॄणामकौशलं व्यक्तीकुर्यात्, विशेषतश्च संस्कृता या केवलमधुना शास्त्रनिचयमेव निश्रिता, न तु लोकव्यवहारं सा लेशतोऽपि शोभितवती, अतस्तस्यास्तु विना व्यवस्थां कौतस्कुती सम्यग्व्यवस्थितिः?, व्यवस्थापकं च तस्या व्याकरणमेवेति शास्त्राण्यधिजिगमिषूणामादित एव तस्योपयोगः, परमर्षयस्तु स्पष्टमूचुर्वाङ्मयविस्तरे यदुताध्येतैव व्याकरणस्य मृषावादविरमणमलं रक्षितुं, तथा च स्पष्टमेवैतत् यदुत विना व्याकरणाध्ययनं न सद्गतिलिप्सापूर्त्तिः न च दुर्गतिपात रक्षा, अत एव च कलिकालसर्वज्ञोपपदैः श्रीहेमचन्द्रसूरिभिर्मुनित्रयेणापूरितमपि पूरितं स्वयं व्याकरणं, किंच निम्नलिखिता नूतनताऽत्र विदुषामवश्यमवलोकनीयाः १ अष्टाध्यायीक्रमोऽत्र प्रायः प्रक्रियाक्रमानतिवृत्तिः २ धातुपाठे पदक्रमेण अकाराद्यन्तक्रमेण च पाठः ३ उणादिषु परःसहस्रेष्वपि अकाराद्यन्तक्रमेणैव पाठः ( विना क्रममपि धातूणादिसूत्रान्वेषणमत्रैव ) एवं विविधाश्चर्यकृद्विधानमप्येतत् व्याकरणं स्वल्पप्रज्ञानामध्येतुं धारयितुं च दुष्करमिति संक्षेपार्थमेषोऽत्रोद्यमोऽस्माकं, विदिततत्त्वा विद्वांसः अत्रत्यं स्खलनासद्भावं क्षंस्यंते यतः स्वभाव एवैष एतेषामिति शं॥ २४६० आश्विनशुक्ला द्वितीया महेशाने ।

निवेदकः श्रमणसंघसेवकः आनन्दसागरः

# श्रीसिद्धप्रभागतविषयानुक्रमः

अकारादिक्रमे द्वादशपृष्ठीया अत्राङ्काः, षोडशपृष्ठीये तु तदनुसारेण




॥ १ ॥

## शुद्धिपत्रकम् ।

| पृष्ठं | लाईन | अशुद्धः | शुद्धः |
|---|---|---|---|
| १० | २ | कर्ता | × |
| २५ | १ | घमः | धर्मः |
| ५० | ४ | कुमहद्भ्या | कुमहद्भ्यां |
| ५८ | ७ | २-९-९३ | २-३-९३ |
| ६१ | ५ | भ्राष्ठाग्ने | भ्राष्ट्राग्ने |
| ६४ | १० | रानु | रादनु |
| ६५ | १ | ४-४-७९ | ४ ४-७८ |
| ६७ | ५ | ण्ण | ण्णौ |
| ७६ | १ | कर्मणिङ | कर्मणिङ् |
| ८१ | ८ | प्यय्त्र्यंव्यंजेने | प्यय्व्यंजने |
| ८६ | १० | धुग् | धूग् |
| ८६ | ८ | ४-१-२०२ | ४-२-१०२ |
| ८७ | ४ | धाये | धान्ये |
| ८८ | ५ | समुच्छ्राय | समुच्छ्राये |
| ८९ | ५ | लीङ | लीङ् |
| ९५ | ३ | ३-४-९० | ३-४-८० |
| ९७ | २ | ४-४-३७ | ४-२-३७ |

पृष्ठ १० × १-१-२७ अधातुविभक्तिवाक्यमर्थवन्नाम, स्वार्थो द्रव्यं लिंगं संख्य शक्तिरित्यभिधेयोऽर्थः, समुच्चयादिर्द्योत्योऽर्थः, वृक्षः बुद्धिः, अविभक्तीति स्वीकृतताद्धितप्रत्ययानां, स्यात्, अजा कर्ता ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १०३ | १ | लीङ्लीनो | लीङ्लिनो | १२४ | ५ | ५-१-१२५ | ५-१-१२६ |
| १०६ | ४ | नगणा | न गृणा | १२५ | ३ | ४-२-६६ | ४-२-६५ |
| १०६ | ११ | ऋतां | ऋमतां | १२७ | ८ | ४-२ ७५ | ४-२-७६ |
| १०७ | ५ | ३-४ | ३-४-१४ | १३५ | ५ | ऋने | ऋमें |
| १०८ | १२ | ३-४-२३ | ३-४-२२ | १३६ | ७ | ५-३-१०४ | ५-३-१०३ |
| ११० | ६ | ७-४ ३६ | ७-४-३८ | १३६ | ८ | ५-३-१०३ | ५-३-१०४ |
| ११३ | १ | परानोः | ३-३-१०१परानोः | १३६ | ९ | ४-३-१०५ | ५-३-१०५ |
| ११३ | १३ | ३ ४-६५ | ३-४-६९ | १३८ | १ | उपसगात् | उपसर्गात् |
| ११६ | ११ | ५-४-३ | ५-४-७ | १३९ | ८ | ५-४-५४ | ५-४-५३ |
| ११७ | ९ | ५-४ ११ | ५-४ २७ | १४१ | १ | ५-५-८८ | ५-४-८८ |
| ११९ | १३ | गत्थर्थाकर्मक | गत्यर्थाकर्मक० | १४१ | ८ | द्यर्यय्यां | द्यय्यर्यां |
| १२० | ९ | स्वामी | स्वामि० | १४२ | १४ | १-२९६ | १-२१६ |
| १२१ | १३ | ४-१-११४ | ४-१-१४ | १४४ | ८ | हरितक्यामितो | हरीतक्यामीतो |
| १२३ | ७ | सक्रत् | शक्रत् | १४५ | ३ | महाराष्टे | महाराष्ट्रे |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १४६ | ९ | १-८० | १-१७९ | १६० | १३ | ३-१४८ | ३-१४७ |
| १४६ | ११ | अलाब्व | वाऽलाब्व० | १६२ | ९ | ४-१४० | ४-१८० |
| १४८ | २ | १-५८ | १-१५८ | १६४ | १४ | ८-२४६ | ४-२४६ |
| १४८ | ७ | हिहिहिं | हिहिंहिं | १६४ | १ | २-२४७ | २-२४८ |
| १५० | १० | २-१२० | २-१३० | १६५ | ७ | द्रयूढे | द्रुक्यूढे |
| १५१ | २ | स्नाम | स्नम० | १६८ | १ | २-२२८ | २-१२८ |
| १५४ | १ | २-०२६ | २-२०६ | १७० | ६ | दैवा | देवा० |
| १५६ | ३ | इयस्या | ईयस्या० | १७० | ७ | ६-१-११७ | ६-१-१३७ |
| १.६ | ८ | वस्त्वार्थे | था स्वार्थे, नवल्लो | १७० | ८ | , पाण्डा | , ६-१-१०४पाण्डा० |
| १५९ | १ | ४-१६१ | ४-१६२ | १७० | १० | पीलु | पीला० |
| १५९ | १४ | ४-१५० | ४-१५१ | १७१ | ३ | बाऽऽयन | वाऽऽयन० |
| १५९ | १ | कृपो | क्रपो | १७१ | १० | विदादे | ६-१-४१ विदादे |
| १५९ | ६ | ४-१७८ | ४-१७७ | १७२ | १४ | ६-१-५१ | ६-१-६२ |
| १६० | ४ | स्नसे | स्त्रंसे. | १७२ | १० | कल्याणा | कल्याण्या |

| | | | |
|---|---|---|---|
| १७३ | ९ | ६-१-२२५ | ६-१-१२५ |
| १७३ | ६ | ६ १-९५ | ६-१ ९६ |
| १७५ | २ | ७ ४-२५ | ७-४-२४ |
| १७५ | ११ | प्रष्ठाद्यः | पृष्ठाद्यः |
| १७७ | ४ | न द्या | नद्यां |
| १७८ | ५ | दे ि क ण | दे रि क ण् |
| १७८ | १३ | ७-४-४९ | ७-४-४९ |
| १८० | ३ | एषमो | ऐषगो |
| १८० | ३ | ७-४-१५ | ७ ४-१६ |
| १८१ | ४ | ६-३-४४ | ६-३-५४ |
| १८१ | ६ | ७६ | ७७ |
| १८४ | ११ | बा ह्य | बाह्य० |
| १८४ | १३ | ६-३-१०२ | ६-३-२०२ |

| | | | |
|---|---|---|---|
| १८७ | १४ | निवृत्ते, | निर्वृत्ते, |
| १९१ | १ | ७-२-२२ | ७-१-२२ |
| १९१ | २ | ७-२-२३पदाद्यं | ७-१-२३पाद्यार्घ्ये |
| १९१ | २ | ७-२-२४ | ७-१-२४ |
| १९३ | ४ | ७-४-६० | ७-४-५० |
| १९६ | १ | धनहारिण्ये | धनाहिरण्ये |
| १९८ | २ | दीर्घश्च | दीर्घश्च |
| १९९ | ११ | वाऽन्त | वान्ति० |
| २०० | १ | अनन्त्यंते | अनत्यंते |
| २०१ | ३ | ७ ३-४३ | ७-३-४६ |
| २३१ | | २३४ | २३१ |
| २३४ | | २३१ | २३४ |

—×—



॥ ७ ॥

## शिष्टानि संस्कृते।

अदसोऽकञायनणोः ३।१।३३ न षष्ठ्या लुक्, आमुष्य-पुत्रिका आमुष्यायणः ॥

अभिनिष्ठानः ८।३।२३

उणादयः ५।२।९३

केशे वा ३।२।१०२ शिरसः शीर्षन्, शीर्षण्याः।

अतो म आने ४।४।११४ वर्धमानः।

पैङ्गाक्षीपुत्रादेरीयः ६।२।१०२ देवतार्थे

प्राचां नगरस्य ७।४।२६ पूर्वोत्तरयोर्वृद्धिः, सौह्मनागरः।

बहुष्वस्त्रियां ६।१।१२४ ञ्यन्तस्य द्रेर्लुप्, पञ्चालानामपत्यानि पञ्चालाः।

यश्चोरसः ६।३।२१२ तुल्यदिश्यर्थे, चात्तसिः।

येऽवर्णे ३।२।१००। नासिकाया नस्, नस्यं।

वेः स्कन्दोऽक्तयोः २।३।५१। षः, वेष्कन्ता।

शस्त्रजीविसंघाञ्ञ्यड् वा, स द्रिः, शावर्यौ शवराः।

समासान्तः ७।३।६९

स्वपो णावुः ४।१।६२ पूर्वस्य, सुष्वापयिष्यति।

भृतिप्रत्ययान्मासादिकः ।७।३।१४० पञ्चकमासिकः।

मनुर्नभोऽङ्गिरो वति १।१।२४ न पदं।

—×—

प्राकृते—

आक्रन्देर्णीहरः ४।१३१
इः सदादौ, १।७२ सइ सया
ईर्हरे वा १।५१ आदेरतः ।
एरदीतौ म्मौ वा ३।८४ एतदः ।
ओत्पूतरबदरनवमालिकानवफलिकापूगफले १।१७०
क्ष्माश्लाघारत्नेऽन्त्यव्यञ्जनात् २।१०१ पूर्वोऽत् ।
ग्रहो वलगेण्हहरमंगनिरुवाराहिपच्चुआः ४।२०९
घूर्णो घुलघोलघुम्मपहल्लाः ४।११७।
चतुरश्चत्तारो चउरो चत्तारि न दीर्घो णो ३।१२५
चतुरो वा ३।१७ दीर्घः, भिसादिषु ।
छोऽक्ष्यादौ २।१७ संयुक्तस्य ।

तिर्यश्चस्तिरिच्छिः २।१४३ ।
धनुषो वा १।२२ हः ।
वाऽऽमंव्यात् सौ मः ३।३७ स्वस्रादेः
पलिते वा १।२१२ तो लः ।
ब्भो दुहलिहवहरुधामुच्चातः ४।२४५ कर्मभावे ।
मधूके वा १।१२२ उः
लघुके लहोः २।१२२ व्यत्ययः
वैरादौ वा १।१५२ अइः ।
सप्ततौ रः १।२२० तः
ह्नो ल्हः २।७६

—×—



॥ ९ ॥

# श्रीवीतरागाय नमः ।

प्रणम्य परमात्मानं, साधुशब्दार्थदर्शिनम् ।
जिनं सर्वज्ञमर्हन्तं, वीरं सिद्धप्रभां ब्रुवे ॥ १ ॥

१-१-१ अर्हम् शास्त्रादौ प्रणिधेयम् । १-१-२ सिद्धिः स्याद्वादात् नित्यानित्यत्वाद्यनेकधर्मशबलैकवस्त्वङ्गीकाररूपात् । १-१-३ लोकात् अनुक्तानां क्रियागुणादिसंज्ञानां परानित्यान्तरङ्गानवकाशानां परं बलीय इत्यादिन्यायानां च सिद्धिः । अआइईउऊऋॠऌॡ । एऐओऔ । अंअः । कखगघङ । चछजझञ । टठडढण । तथदधन । पफबभम । यरलव । शषसह । इति वर्णाम्नायः । तत्र—१-१-४ औदन्ताः स्वराः, संज्ञा १ परिभाषा २ ऽधिकार ३ विधि ४ प्रतिषेध ५ नियम ६ विकल्प ७ समुच्चया- ८ तिदेशा ९ नुवादेषु १० संज्ञाऽत्र । १-१-५ एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः स्वराः, मात्रा कालविशेषः, द्वन्द्वान्तपदं प्रत्येकं, अइउऋऌ एकमात्रा ह्रस्वाः, आईऊॠॡएऐओऔ द्विमात्रा दीर्घाः, अ३ इ३ उ३ इत्याद्यास्त्रिमात्राः प्लुताः । १-१-६ अनवर्णा नामी स्वराः । १-१-७ ऌदन्ताः समानाः स्वराः । १-१-८ एऐओऔ सन्ध्यक्षरम्, नैषां ह्रस्वाः । १-१-९ अंअः अनुस्वारविसर्गौ । १-१-१० कादिर्व्यञ्जनं हान्तः । १-१-११ अपञ्चमान्तःस्थो धुट् कादिः । १-१-१२ पञ्चको वर्गः कादिमान्तेषु, कचटतपाः । १-१-१३ आद्यद्वितीयशषसा अघोषाः, कखचछटठतथपफशषस । १-१-१४ अन्यो घोषवान् । १-१-१५ यरलवा अन्तःस्थाः । १-१-१६ अंअः≍क≍पशषसाः शिट् । १-१-१७ तुल्यस्थानास्यप्रयत्नः स्वः, अकवर्गहजिह्वामूलीयविसर्गाणां कण्ठः, इचवर्गयशानां तालु, ऋटवर्गरषाणां मूर्धा, ऌतवर्गलसानां दन्ताः, उपवर्गोपध्मानीयानामोष्ठौ, एऐ कण्ठतालु, ओऔ कण्ठोष्ठं, वो दन्तोष्ठ्यः, ङञणनमा अनुना-

सिकाश्च, सपञ्चमान्तस्थो ह उरस्यः, शषसहा ऊष्माणः । यत्ने स्पृष्टो वर्ग्याणां, ईपत्स्पृष्टोऽन्तःस्थानां, ईषद्विवृत ऊष्मणां, विवृतः स्वराणां । १-१-३७ अप्रयोगीत्, तस्य लोपः । १-१-३८ अनन्तः पञ्चम्याः प्रत्ययः विहितः॥इति संज्ञा१।

१-२-२१ इवर्णादेरस्वे स्वरे यवरलम् । ७-४-१०५ सप्तम्या पूर्वस्य, यथासंख्यमनुदेशः समानां, दध्य् अत्र । १-३-३२ अदीर्घाद्विरामैकव्यञ्जने स्वरादर्हस्यानु द्वे वा । ७-४-१०४पञ्चम्या निर्दिष्टे परस्य, विरामोऽवसानम्, दध्ध्य् अत्र, यावत्संभवस्तावद्विधिस्ततः त्वक्क्क्, विरामे द्वित्वे पुनर्द्वित्वम्, संयुक्तेऽपीति । ७-४-१०९ स्थानीवावर्णविधौ, इति नात्रेत्त्वं, वर्णविधित्वात्, अवर्णेति पन्थाः क इष्टः उरश्केण । ७-४-११० स्वरस्य परे प्राग्विधौ आदेशः स्थानीवेति स्थानित्वे । ७--४--१११ न सन्धिङीयक्विद्विदीर्घासद्विधावस्क्लुकि स्थानिवदादेशः स्वरस्येति यो द्वित्वविधौ नेत्त्वं, असिद्धमित्यस्य बाधनाय द्वीति, 'समाने'त्यतो 'लिलौ' यावत्सन्धिः । १-३-४९ तृतीयस्तृतीयचतुर्थे धुटःस्वः, दद्ध्य् अत्र।१-३-३४ततोऽस्याः, अञ्वर्गादन्तस्थाया द्वे वा, दद्ध्य्य् अत्र, स्वरहीनसंयोगे दद्ध्यत्र दध्ध्यत्र दद्ध्यत्र दध्यत्र, इवर्णादेरिति पञ्चम्यां दधि यत्र, मघ्वासनं क्रादिः लित्। १-३-३८ पुत्रस्यादिन्पुत्रादिन्याक्रोशे न द्वे, पुत्रादिनी पापे। १-३-३१ हाँदर्हस्वरस्यानु द्वे नवा स्वरपूर्वात्, नवेति विकल्पानुवृत्त्यर्थम्, अर्हेति व्यक्तिस्तेन न 'संयोगस्यादा' विति त्वक्क् इत्यत्र-कलुक्, मह्व्यत्र। १-२-२३एदैतोऽयाय् स्वरे, संनियोगशिष्टानामेकापायेऽन्यतमस्याप्यपाय इत्यस्वे इति नात्र, मुनये रायौ। १-२-२४ ओदौतोऽवाव् स्वरे, लवनं ग्लावौ। १-२-२५ य्यक्ये प्रत्यये ओदौतोऽवावौ । ७-४-११४ सप्तम्या आदिः विशेषणं, गव्यं नाव्यं । १-२-२६ ऋतो रस्तद्धिते यि, पित्र्यं । १-३-२४स्वरे वा अवर्णभोभगोऽघोभ्यःपदान्तव्योर्लुगसन्धिः, त इह, अन्तरंगं बहिरंगादिति न दीर्घः, तयिह,

ताविह ता इह। १-२-१समानानां तेन दीर्घः सहेकः।७ ४-१२० आसन्नः स्वस्थानमानादिभिः, दंडाग्रं दधीदं मानूदयः, सर्वं वाक्यं सावधारणं तन्नात्र स्याद्वादः, बहुवचनाद् ह्रस्वादि। १-२-३ लृत ऋृलृ ऋलृभ्यां वा, ऋृकारः लृकारः। १-२-४ ऋतो वा तौ च ऋलृभ्यां ऋृलृ वा ऋलृ च, पित्रृषभः होत्लृकारः पितृषभः। १-२-५ ऋस्तयोः ऋकारलृकारयोः, कृषभः होतृकारः १-२-६ अवर्णस्येवर्णादिनैदोदरल् सह, देवेशः शुद्धोदकं। १-३-४८ धुटो धुटि स्वे वा व्यञ्जनाल्लुक्, तवर्धिः तवार्द्धिः। १-३-३३ अञ्वर्गस्यान्तःस्थातः द्वे वाऽनु,सल्ल्कारःसल्ल्लृकारःसल्लृकारः सल्कारः। १-२-१२ ऐदौत् सन्ध्यक्षरैः अवर्णस्य सह, सैन्द्री तवौदनः। १-२-१३ ऊटा अवर्णस्यौः, लौः पौः। १-२-१४ प्रस्यैषैष्योढोढ्यूढे स्वरेणावर्णस्यैदोतौ,प्रैपः प्रैष्यः, अर्थवद्ग्रहणे नानर्थकस्येति ऊढः प्रोढयति एपः प्रेपते च, 'उपसर्गस्ये' त्यस्येदं बाधकं 'नोमाङी' त्यस्येति प्रेपः, नोढ इति। १-२-१५ स्वैर-

स्वैर्यक्षौहिण्यां ऐदौतौ, स्वैरः, स्वैरी ताच्छिलिकादिणिनि, नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्वैरिणी, अक्षौहिणी। १-२ ७ ऋणे प्रदशार्णवसनकंबलवत्सरवत्सतरस्यार् सह ऋता, प्रार्णं, विशेषेण सामान्यं बाध्यते नतु सामान्येन विशेष इत्यर्न, पर्जन्यवल्लक्षणप्रवृत्तेः प्र ऋणं। १-२-८ ऋते तृतीयासमासे, दुःखार्त्तः। १-२-९ ऋत्याऽपसर्गस्य धातौ, परार्ध्नोति, पुनरार्ग्रहणान्नात्र ह्रस्वः, येन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञा तेन प्रर्च्छकः। १-२-१०नाम्नि वाऽऽर् उपसर्गावर्णस्यर्कारादौ नामधातौ, प्रार्षभीयति प्रर्षभीयति, प्रऋषभीयतीति। १-२-११ लृत्याल्वा, उपाल्कारीयति उपल्कारीयति। १-२-१६ अनियोगे लुगेवे अवर्णस्य, इहेव। १-२-१७ वौष्ठौतौ समासे, बिम्बोष्ठी बिम्बौष्ठी स्थूलोतुः स्थूलौतुः। १-२-१८ ओमाङि, उपेहि, उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभागिति आङत्र, अद्योम्। १-२-१९ उपसर्गस्यानिणेधेदोति, प्रेजते परोखति। १-२-२०वा नाम्नि,

उपेडकीयति उपैडकीयति प्रोघीयति प्रौघीयति। १-२-२७ एदोतः पदान्तेऽस्य लुक्, तेऽत्र पटोऽत्र। १-२-२८ गोर्नाम्न्यवोऽक्षे पदान्ते ओतः, गवाक्षः, अन्यत्र गोऽक्षाणि, गवाक्षाणीति। १-२-२९ स्वरे वाऽनक्षे, गवाग्रं गोऽग्रं, ओत इति चित्रगविदं। १-२-३१ वाऽत्यसन्धिः, गोअग्रं। १-२-३० इन्द्रे, गवेन्द्रयज्ञः ॥ इति स्वरसन्धिः २।

१-२-३२ प्लुतोऽनितौ स्वरेऽसन्धिः, सुश्लोक ३ आगच्छ, इतौ वेति। १-२-२२ ह्रस्वोऽपदे वा इवर्णादेरस्वे स्वरे, न चेन्निमित्तनिमित्तिनावेकत्र पदे, कुमारि अत्र, ह्रस्वान्न यः, कुमार्यत्र, कुमारी अत्रेति, अति एति, समासे नद्युदकं, अनुव्यचलादित्यखंडमव्ययं। १-२-२ ऋलृति ह्रस्वो वा समानानां, ब्रह्म ऋषिः, ह्रस्वविधेर्नार्, ब्रह्मर्षिः, बहुवचनात् ऋ ऋषभः।७-४-८९ संमत्यसूयाकोपकुत्सनेष्वाद्यामन्त्र्यमादौ स्वरेष्वन्त्यः प्लुतः, स्वरस्य ह्रस्वदीर्घप्लुता इत्यनित्यस्तेन स्वरेष्विति, एषु आद्यमामन्त्र्यं द्विराद्यस्य चान्त्यः स्वरः प्लुतो वा, माणवक ३ माणवक !। ७-४-९० भर्त्सने पर्यायेण वा प्लुतः आमन्त्र्यं द्विश्च, चौर ३ चौर, चौर चौर ३, चौर चौर। ७-४-९१ त्यादेः साकाङ्क्षस्याङ्गेन युक्तस्यांशो वा प्लुतः भर्त्सने, अङ्ग कूज ३ घातयिष्यामि त्वां। ७-४-९२ क्षियाशीःप्रैषे त्याद्यन्त्यस्य वाक्यान्तराकांक्षस्यान्त्योऽशःप्लुतो वा, क्षिया आचाराद् भ्रेषः, सिद्धान्तमध्येषीष्ठाः ३ अध्येषीष्ठा वा तर्कं च। ७-४-९३ चित्तीवार्थे वाक्यस्यान्त्यः स्वरो वा प्लुतः, अग्निश्चिद्भाया३त् भायाद्वा। ७-४-९४ प्रतिश्रवणनिगृह्यानुयोगे वान्त्यः स्वरः, गां मे देहि, ददामि ३ ददामि वा। ७-४-९५ विचारे पूर्वस्य अन्त्यः प्लुतो वा, अहिर्नु ३ अहिर्नु वा रज्जुर्नु ७-४-९६ ओमः प्रारम्भे स्वरो वा प्लुतः, ओ ३ म् ओम्वा ऋषभमृषभगामिनं प्रणमत। ७-४-९७ हेः प्रश्नाख्याने वान्त्यः प्लुतः, अकार्षीः कटं ?, अकार्षं हि ३ हि वा। ७-४-९८ प्रश्ने च प्रतिपदं प्लुतः चादुत्तरे वा, अगमः ३

ग्रामा३न् अगमः ग्रामान् १ वा, अगम३म् ग्रामा३न् अगमम् ग्रामान् वा । ७-४-९९ दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लन्तृत् वा प्लुतः, भो देवदत्त३ देवदत्त सक्तून् पिब देवद३त्त दे३वदत्त वा । ७-४ १०० हैहेष्वेषामेव स्वरः प्लुतः दूरादामन्त्र्ये, हे३ मैत्र आगच्छ, आगच्छ है३ मित्र ॥ ७-४-१०१ अस्त्रीशूद्रे प्रत्यभिवादे भोगोत्रनाम्नो वाऽन्त्यः स्वरः प्लुतः, अभिवादये मैत्रोऽहं, भो आयुष्मानेधि भो ३ः भो वा । १-२-३३ इ ३ वा स्वरेऽसन्धिः, लुनीहि ३ इति लुनीहीति वा । १-२-३४ ईदूदेद् द्विवचनं, मुनी इत्याह, प्रकृतिवदनुकरणं, पचेते इति, अमी ३ इतीति, तन्निमित्तकसन्धिनिषेधात् तवे आसाते । दम्पतीवेति । १-२-३५ अदोमुमी, अमुमुईचा अमी अत्र । १-२-३६ चादिः स्वरोऽनाङ् केवलः, आ एवं नु मन्यसे ई ईदृशः संसारः। आङीषदर्थेऽभिव्यक्तौ, क्रियायोगे ऽवधावपि। आ वाक्ये स्मरणे च स्यादाः संतापप्रकोपयोः ॥ १ ॥ १-२-३७ ओदन्तः चादिरसन्धिः, अहो अत्र, स्वरादौ नु मिथोऽत्र । १-२-३८ सौ नवेतौ ओदन्तोऽसन्धिः, विष्णो इति विष्णविति । १-२-३९ ऊँ चोञ्, उँ इति विति उ इति । १-२-४० अञ्वर्गात्स्वरे वोऽसन् उञो वा, किम्वुक्तं किमु उक्तं, कुङ्ङ्वास्ते, नित्यत्वात् प्राग्वत्वमसत्त्वाद् द्वित्वं च, नञ्निर्दिष्टस्यानित्यत्वात् तद्वत्वस्य । १-२-४१ अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः वा, दधिँ मधुँ, अग्नी इत्यादौ न, अन्तो विरामः। १-३-५२ न सन्धिः विरामे, दधि अत्र । वाक्यादन्यत्र नित्यः सन्धिः ॥ इत्यसन्धिः ३ ।

१-३-६० तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ, तच् शेते, यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते इति न तृतीयः, परं यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते इति स्यात्, प्राकृते प्राक्स्थितेऽल्पनिमित्ते चान्तरङ्गे प्रत्ययिकं बहिःस्थितं बहुनिमित्तं च बहिरंगमसिद्धं तेन न कः, तच्चरति राज्ञः पेष्टा तड्डीनम् इड्डे । १-३-६१ सस्य शषौ श्चवर्गष्टवर्गाभ्यां योगे,

वृश्चति 'नाम्यन्तःस्थे' त्यादिना न षत्वमसिद्धत्वात्, धनुष्षु ब्रम्मणिष्व। १-३-६२ न शात् तवर्गस्य चवर्गः, अश्नुते। १-३-६३ पदान्ताट्टवर्गादनाम्नगरीनवतेः सतवर्गयोः न षटवर्गौ, षण्ण् नयाः, अनुनासिकादतु द्वित्वं, षण्णाम्। १-३-६४ षि तवर्गस्य पदान्ते न टवर्गः, तीर्थकृत्षोडशः। २-१-७६ धुटस्तृतीयः पदान्ते। १-१-२० तदन्तं पदम् स्याद्यन्तं त्याद्यन्तं च, अन्तग्रहणात् संज्ञोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्य ग्रहणं, न तदन्तस्य। १-१-२१ नाम सिद्य्व्यञ्जने पदं, वाग्भिः, कस्यादिः क्रादिरिति विसर्गानुस्वारयोर्व्यञ्जनत्वे। २-१-८९ पदस्य संयोगान्तलुगिति खो लुकि धुट्त्वे च गः सुदुग्भ्यां। १-३-१ तृतीयस्य पञ्चमे पदान्ते वाऽनुनासिकः, तन्नयनं, परे दोऽसत्त्वान्न नलोपः, अनुनासिके व्यञ्जनस्य न च ह्रस्वादिति द्विः त्वङ्ँ इति। मण्डूकप्लुत्याऽसत्त्वात् ककुम्मण्डलमित्यत्र नानुस्वारः। १-३-२ प्रत्यये च पदान्ते पञ्चमे तृतीयस्यानुनासिकः, चिन्मयं, चादत्र वाऽनुवृत्तिर्न, अपेक्षातोऽधिकार इति त्वनित्यः। १-३-६५ लि लौ पदान्ते तवर्गस्य, तल्लुनाति भवांल्लिखति, नकारस्यानुनासिकलत्वार्थं लाविति तेन 'वाऽष्टन आ' इत्यत्र न सानुनासिक आः, वर्णैकदेशोऽपि वर्णग्रहणेन गृह्यते इति तल्लृकारः। १-३-४४ उदः स्थास्तम्भः सलुक्, उत्थाता, उत् स्थानमिति तुर्व्यार्थं उत्। १-३-३ ततो हश्चतुर्थः तृतीयात् पूर्वसवर्णो वा पदान्ते, तद्धितं तद् हितं। १-३-१४ तौ मुमो व्यञ्जने स्वौ पदान्तेऽनुस्वारानुनासिकौ, त्वं करोषि त्वङ् करोषि, संभवे व्यभिचारे च विशेषणमर्थवदिति मोरपदान्ते चंक्रम्यते चङ्क्रम्यते, त्वन्तरसीत्यादौ 'नोऽप्रशान' इत्यादिना न सकारः लाक्षणिकत्वात्। १-३-३९ म्नां धुड्वर्गेऽन्त्योऽपदान्ते स्वोऽन्तु, गन्ता अञ्चितः, वर्गान्त्यार्थं वर्गेति, अनुस्वारमपीति। १-३-४० शिड्ढेऽनुस्वारः, पुंसि यशांसि, बहुवचनात् बृंहणं दंश इत्यादौ न णत्वणत्वाद्वित्वादि। १-३-१५ मनयवलपरे हे पदान्ते मोऽनुस्वा-

रानुनासिकौ,किन् ह्नुते किं ह्नुते। १-३-१६सम्राट्। १-३-१७ ङ्णोः कटावन्तौ शिटि नवा पदान्ते, प्राङ्क् शेते, प्राङ् शेते, सुगण्ट्सु सुगण्सु। १-३-४प्रथमादधुटि शश्छः पदान्ते वा,प्राङ्क् छेते,आदेशबाधनायान्ताविति, पञ्चम्यां तु अत्ययता ततो नामत्वं स्यादिश्च। १-३-५९ शिट्याद्यस्य द्वितीयो वा, अफ्सरः; प्राङ्ख् शेते सुगण्ठ्सु चेति। १-३-३६ ततः शिटः प्रथमद्वितीयाद्वा द्विः,सुगण्ट्स्सु। १-३-१८ड्नः सः त्सोऽश्चः पदान्ते वा, प्रड्त्सीदन्ति, प्रट्त्सीदन्तीति,भवान्त्साधुः, सकार्यमादेशशस्येति अश्च इति,तेन मधुगिति। १-३-१९नः शि ञ्च् वा पदान्तेऽश्चि, भवाञ्च् छूरः भवाञ् शूरः भवाञ् छूरः भवान् शूरः। १-३-२७ ह्रस्वाद् ङ्णनो द्वे पदान्ते स्वरे, कुर्वन्नास्ते, असिद्धत्वान्न णः। १-३-१२ स्सटि समः सोऽन्तादेशोऽनुस्वारानुनासिकौ च पूर्वस्य, संस्स्कर्ता सँस्स्कर्त्ता। १-३-१३लुक् समः स्सटि,सस्कर्त्ता,पृथग्योगान्नानुस्वाराद्यनुवृत्तिः, अनुनासिक इति सँस्कर्त्ता।१-३-३९शिटः प्रथमद्वितीयस्य वा द्विः, सस्कर्त्ता,आदेशानुनासिकाद् द्वित्वे त्वञ् च्छात्रः। १-३-९ पुमोऽशिट्यघोषेऽख्यागि रः अधुट्परेऽनुस्वारानुनासिकौ च पूर्वस्य, से पुंश्चलीति न। २-३-३ पुंसः रः कखपफि सः, पुंस्काम्यति पुँस्काम्यति। १-३-१० नॄनः पेषु वा रोऽनुस्वारानुनासिकौ च पूर्वस्य, बहुवचनान्नाधुट्परताऽत्र। १-३-५३ रः पदान्ते विसर्गस्तयोः विरामाघोषयोरनु।१-३-५ रः कखपफयोः≍क≍पौ वा पदान्ते, नॄँ≍पाहि नॄँ≍पाहि।१-३-११ द्विः कानः कानि सः अनुस्वारानुनासिकौ च पूर्वस्य, कांस्कान् काँस्कान्, नात्र रुत्वं रानुवृत्तौ सग्रहणात्, असुख्यव्यञ्जनत्वाच्च न 'पदस्ये' ति। १-३-८ नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे त्रदते सद्वितीये शषसाः पदान्ते, आगमोऽनुस्वार आदेशोऽनुनासिकः,भवाँश्चरति भवांश्चरति। ७-४-१२१ सम्बन्धिनां सम्बन्धे इति शास्ततः।१-३-३०स्वरेभ्यः छो द्विः, पदान्तनिवृत्तये बहुत्वं।१-३-५०अघोषे प्रथमोऽशिटः धुटोऽनु,

देवच्छत्रं। १-३-२८ अनाङ्माङो दीर्घाद्वा छः द्वे रूपे पदान्ते, जम्बूच्छाया जम्बूछाया। १-३-२९ प्लुताद्वा दीर्घात् पदान्ते छो द्विः, इन्द्रभूते ३ छत्रं च्छत्रं वा आनय, ह्रस्वदीर्घोपदिष्टं न प्लुतस्येति सूत्रम्, विशेषणं तु स्थानोपचारात्। १-३-४७ व्यञ्जनात्पञ्चमान्तःस्थायाः सरूपे वा लुक्, आदित्य्यः आदित्यः। १-३-२३ व्योः अवर्णात्पदान्ते घोषवति लुगसन्धिः,वृक्ष गच्छति, क्विप्यूङ्भावाद् विचि, अनादौ स्वरजयोरन्यतोऽपीति तेन साध्युदयः॥ इति व्यञ्जनसन्धिः ४।

॥ २-१-७२ सो रुः पदान्ते, असत्त्वेऽपि षत्वे सर्पिष्षु। १-३-५४ ख्यागि पदान्ते रो विसर्ग एव, जिनः ख्यातः, नानुबन्धकृतान्यसारूप्यानेकस्वरत्वानेकवर्णत्वानि, निरनुबन्धग्रहणे सामान्यस्य 'अरो' रिति वर्जनात्। १-३-५५ शिट्यघोषात् रो विसर्ग एव पदान्ते,सर्पिःप्सातम्,न सषत्वादि। १-३-५६व्यत्यये लुग्वाऽघोषपरे शिटि, क स्खलति कः स्खलति। १-३-६शषसे शषसं वा रः पदान्ते, पुनश्शेते पुनः शेते कस्साधुः कः साधुः, नेतो विकल्प इति वा। १-३-७ चटते सद्वितीये शषसाः, मातश्चरति मातष्टीकते,शषविधानं धुटस्तृतीयत्ववारणाय असिद्धं बहिरङ्गमन्तरङ्गे इति न्यायस्त्वनित्यस्तेन बभुवुष इत्यादावुक्त्वमिति, न च जडौ, व्यक्त्युक्तेः, यथासंख्यत्वाय न चछटठतथे। १-३-२० अतोऽति रोरुः पदान्ते, कोऽर्थः। १-३-२१ घोषवति पदान्तेऽतो रोरुः, को देवः। १-३-२२ अवर्णभोभगोऽघोर्लुगसन्धिः रोर्घोषवति पदान्ते, धार्मिका जयन्ति भो गच्छसि, केचित् सौ भवद्भगवदघवतामेते,तन्न, द्विवचनाद्यभावात्,सन्नियोगेति लुचाऽसन्धिः उत्तरार्थः। १-३-२६ रोर्यः अवर्णभोभगोऽघोभ्यः पदान्ते स्वरे, कयास्ते, असत्त्वाद्रोर्नात आः, भोयिह भो इह। १-३-२५ अस्पष्टाववर्णात्त्वनुञि वा, अवर्णभोभगोऽघोभ्यो वयोरस्पष्टौ वयौ स्वरे, भो यँत्र भो युँ कयुँ, अवर्णात्त्वनुञि वा, पटविह पटविह तयिह तयिह, रोर्यो लोप उञि, भोआदेः स्वरे चेति। १-३-५७

अरोः सुपि रः रेफस्य, गीर्षु, न विसर्गपकारौ । २-१-७५ रो लुप्यरि अह्नः, अहर्ददाति । २-१-७४ अह्नः पदान्ते रुः, अहोरूपं अहोरमते । २-१-६० णषमसत्परे स्यादिविधौ च, दीर्घाहाः,पत्वे णत्वमसत्,परे२-१-९०स्यादिविधौ२-१-९८ यावत्। १-३-५८ वाहर्पत्यादयः, अहर्पतिः अहःपतिः अहऽपतिः एवं गीर्पतिधूर्पती हे प्रचेता प्रचेतः । २-३-१४ भ्रातुष्पुत्रकस्कादयः, भ्रातुष्पुत्रः परमसर्पिष्कुंडिका परमधनुष्कपालं परमबर्हिष्पूलः परमयजुष्पात्रं, समस्तार्थमिदं, कस्कः कौतस्कुतः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्कः भास्करः अहस्करः अयस्कांडं तमस्कांडं अयस्कांतः अयस्कुंडं मेदस्पिडः अयस्पिडः । १-३-४१ रो रे लुग् दीर्घश्चादिदुतः पूर्वस्यानु, पुना रमते, अग्निर्वाति अहोरूपं । १-३-४२ ढस्तड्ढे लुग् दीर्घश्चादिदुतः, लीढं गूढं, चक्षुड्ढवे इत्यत्र ढद्वित्वे तड्ढत्वाभावान्न लुग्, अग्निर्वाति मेढा । १-३-४५ तदः से स्वरे पादार्था लुक्, सैप दाशरथी रामः, 'रोर्य' इत्यस्यापवादस्तेन सोऽहं, पादार्थेति स एप भरतो राजा, शब्दार्थानुकरणे प्रकृतिवदनुकरणं न शब्दानुकरणे इति तदः । १-३-४६ एतदश्च व्यञ्जनेऽनग्नञ्समासे सेर्लुक, चात्तदः, चकारो यस्मात्परस्तत्सजातीयमेव समुच्चिनोति, स ददाति एप ददाति परमैप ददाति;तन्मध्यपातितस्तद्ग्रहणेन गृह्यते इति प्राप्ते अनगिति, सको याति, नञा क्रियासम्बन्धात् ननुक्तं तत्सदृशे इति नात्र । २-३-१ नमस्पुरसो गतेः कखपफि रः सः, नमस्करोति पुरस्करोति नमस्कृत्य,अन्यत्र नमःकृत्वा।२-३-२तिरसो वा, तिरस्कृत्य तिरःकृत्य, तिरस्कृत्वेति । २-३-४ शिरोऽधसः पदे समासैक्ये रः सः,शिरस्पदम् अधस्पदम्, क्वचिदुभयगतेरकृत्रिमे पदे । २-३-५ अतः कृकमिकंसकुंभकुशाकर्णीपात्रेऽनव्ययस्य रः सः समासैक्ये, अयस्कारः, आणि पयस्कामी, अयस्कुम्भकपालानि पयस्पात्री, अनेति उपपयःकारः, गतिकारकेत्यत्र क्विब्ग्रहणात्प्रत्ययान्तावत्र कृकमी,णे पयःकामा, कंस-

ग्रहणादव्युत्पन्नान्युणादीनि । २-३-६ प्रत्ययेऽनव्ययस्य कख-
पफि रः सः, पयस्पाशं पयस्कल्पं पयस्कं । २-३-७ रोः काम्ये
अनव्ययस्य सः, पयस्काम्यति, सिद्धे सत्यारम्भो नियमाय
द्वाःकाम्यति । २-३-८ नामिनस्तयोः षः कल्पपाशकप्रत्यये रः
काम्ये च रोः, सर्पिष्पाशं धनुष्कल्पं धानुष्कं सर्पिष्काम्यति ।
२-३-९ निर्दुर्बहिराविष्प्रादुश्चतुरां कखपफि रः षः, निष्पीतं
चतुष्पात्रं, एकदेशविकृतमनन्यवदिति निरष्कुल!, बहुत्वान्निर्दु-
र्निस्दुसां । २-३-१० सुचो वा, चतुष्पचति चतुःपचति, स्वं
रूपं शब्दस्याशब्दसंज्ञायामित्यानित्यस्तेन विकल्पेन, परत्वाद् ।
२-३-११ वेसुसोऽपेक्षायां, सर्पिष्करोति सर्पिः करोति, प्रत्यया-
प्रत्यययोः प्रत्ययस्येति मुनिः करोति, मुहुरव्युत्पन्नं, चक्रुष्कुलानीति ।
२-३-१२ नैकार्थेऽक्रिये, सर्पिःकालकं । २-३-१३ समासे-
ऽसमस्तस्य पूर्वेण, सर्पिष्कृत्य धनुष्खंडं । ७-४-११५ प्रत्ययः
प्रकृत्यादेः विशेषणमिति नात्र, बहुसर्पिष्पात्रं अत्र बहुः प्रत्ययः

इति रसन्धिः ॥ ५ ॥

कर्त्ता आक्षिकः, अवाक्येति चित्रगुः बहुगुडः, अनुकार्यानु-
करणयोस्तु विवक्षाधीनैव नामसंज्ञा तेन गवित्ययमाह पचतिमाह ।
१-१-१९ स्त्यादिर्विभक्तिः, स्यादयः सुबन्ताः तिवाद्याः स्या-
महिपर्यन्ताश्च विभक्तयः। १-१-१८ स्यौजस्अमौशस्टाभ्यां-
भिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङस्ओस्आम्ङिओस्सुपां
त्रयी त्रयी प्रथमादिः सप्तम्यन्ता नाम्नः, आदेशग्रहाय बहुत्वं ।
७-४-११८ परः प्रकृतेः प्रत्ययः, देवः । ३-१-११९ स्यादा-
वसंख्येयः समानशब्दानामेकः शेषः, देवौ, संख्यार्द्विशती नव-
तयः । यत्र तुल्यं रूपं ( मातरौ ) अनुप्रयोगसाम्यं ( ताभ्यां ) वेति
च । २-१-११३ लुगस्यादेत्यपदे एवोत्तरे इति लुक्संभवे
१-४-१ अत आः स्यादौ जस्भ्याम्ये । ७-४-११३ विशेषण-
मन्तः, देवाः । २-२-१२१ जात्याख्यायां नवैकोऽसंख्यो बहु-
वत्, संपन्नो यवः संपन्ना यवाः । २-२-३२ आमन्त्र्ये प्रथमा

।१-४-४४ अदेतः स्यमोर्लुक् आमन्त्र्ये, हे देव हे देवौ हे देवाः, अम्ग्रहणात् कतरत्, आमन्त्र्याभिव्यक्तये हेशब्दः।१-४-४६समानादमोऽतः लुग्, देवम् देवौ। १-४-४९ शसोऽता सश्च नः पुंसि सह दीर्घः समानस्य, देवान्, स्त्रीत्वात्यागाचश्चाः, नान्वाचीयमाननिवृत्तौ प्रधानस्य निवृत्तिरिति नत्वाभावेऽपि दीर्घता, दीर्घत्वायोगाद्वाः, अर्थतः स्त्रीत्वेऽपि दारान्। १-४-५ टाङसोरिनस्यौ अदन्तात्, देवेन देवाभ्यां। १-४-२ भिस ऐस्, अर्थवशाद्विभक्तिपरिणामस्तेनात इत्यदन्तात्। ७-४-१०८ प्रत्ययस्य च सर्वस्य विधिः, देवैः। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्यनित्यस्तेन निर्जरसैः, एद्बहुसित्यतः सावकाशान्निरवकाशं बलीय इदम्। १-४-६ ङेङस्योर्यातौ अतः, देवाय देवाभ्यां। १-४-४ एद्बहुस्भोसि स्यादावतः, देवेभ्यः देवात् देवाभ्याम् देवेभ्यः देवस्य देवयोः। १-४-३२ ह्रस्वापश्च आमो नाम्, चात्स्त्रीदूतः। १-४-४७ दीर्घो नाम्यतिसृचतसृष्रः आमादेशे समानस्य, देवानाम् देवे देवयोः। २-३-१५ नाम्यन्तःस्थाकवर्गात् पदान्तः कृतस्य सः शिड्नान्तरेऽपि षः, देवेषु, पृथग्नोपादानात् शिटा नकारेण वेति निस्से अत्र ग्नन्तरे पुंसु अत्र मोऽनुस्वारे च न षः। सर्वविश्व (द्रव्यावयवप्रकारगुणानां कात्स्न्र्ये) उभ उभयट् अन्य अन्यतर इतर डतर डतम त्व त्वत् नेम समसिमौ सर्वार्थौ पूर्वपराऽवरदक्षिणोत्तरापराधराणि व्यवस्थायां स्वमज्ञातिधनाख्यायाम् अन्तरं बहिर्योगोपसंव्यानयोरपुरि त्यद् तद् यद् अदस् इदम् एतद् एक ( अन्यार्थोऽपि ) द्वि युष्मद् भवतु अस्मद् किं इति सर्वादिस्त्रिलिंगोऽसंज्ञायां, हेत्वर्थे सर्वविभक्त्यर्थमुभत्वद्विद्वियुष्मदस्मद्भवतः, अन्यतमनिवृत्तयेऽन्यतरः, सर्वादिः स इति, प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तग्रहणात् अत्र स्वार्थिकाभावाय डतरडतमौ, पुंवद्भावाकुडद्रयः अन्यत्यदादेराः त्यदादिः शेषः आयनिश्च फलं, त्वकत्पितृक इत्यत्रान्तरङ्गत्वात्प्रागक्, त्वत्कपितृक इति। १-४-९ जस इः सर्वादेरतः,

सर्वे। २-३-६३ रपृवर्णान्नो ण एकपदेऽनन्त्यस्यालचट-
तवर्गशसान्तरे, सर्वेण, एकशब्दस्य नियमार्थत्वेन चर्मना-
सिकः। १-४-७ सर्वादेः स्मैस्मातौ ङेङस्योरदन्तात्, सर्व-
स्मै, सर्वस्मात्। १-४-१५ अवर्णस्यामः साम् सर्वादेः,
सर्वेषाम्। १-४-८ ङेः स्मिन् सर्वादेरतः, सर्वस्मिन्। नित्य-
द्वित्वे उभशब्दः, उभौ, अद्वित्व उभयः, उभये उभयस्मिन्। १-
४-१६ नवभ्यः पूर्वेभ्य इस्मात्स्मिन् वा जस्ङसिङीनां,
पूर्वे पूर्वाः पूर्वस्मात् पूर्वात् अन्तरस्मिन् अन्तरे बाह्ये शाटके वा
। १-४-१० नेमार्धप्रथमचरमतयायाल्पकातिपयस्य वा
अतो जस इः, नेमे नेमाः द्वितये द्वितयाः द्वये द्वयाः अर्धकाः,
संज्ञायां नेमाः, एकः संख्यान्यासहायाद्वितीयार्थः। १-४-११
द्वन्द्वे वा सर्वादेर्जस इः, दन्तकतमे दन्तकतमाः। १-४-१२
न सर्वादिः द्वंद्वे सर्वादिः, कतरकतमानां, पुंवद्भावात् कपि
कतरकतमका इत्येव, अन्यार्थत्वे प्रियसर्वाय। १-४-१३
तृतीयान्तात्पूर्वावरं योगे न सर्वादिः, पूर्वाय मासेन। प्रत्यय-
लोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायत इति वर्षावराय। १-४-१४
तीयं ङित्कार्ये वा सर्वादिः, द्वितीयस्मै द्वितीयाय, प्रातिपदिका-
प्रातिपदिकयोः प्रातिपदिकस्यैव ग्रहणं पटुजातीयाय, निर्जरः
। २-१-३ जराया जरस् वा स्वरादौ स्यादौ, स्वान्यसम्ब-
न्धिनि। ७-४-१०७ अनेकवर्णः सर्वस्य, परं निर्दिश्यमानस्या-
देशाः, निर्जरसौ निर्जरसः निर्जरान् निर्जरसा निर्जरैः निर्जरसैः
निर्जरसः २, इनातोरपीति। २-१-१०१ दन्तपादनासिकाहृद-
यासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नस्हृदसन्युषन्नुदन्-
दोषन्यकञ्शकन्वा शसादौ स्यादौ, दतः दन्तान् दता
दन्तेन दद्भ्यां. पदः पादान् पदा पादेन पद्भ्यां पादाभ्याम्
यूषान्। १-१-२९ पुंस्त्रियोः स्यमौजस् घुट्। २-१-१०८
अनोऽस्य लुक् ङीस्याद्यघुट्स्वरे, यूष्णः यूष्णा। २-१-९१
नाम्नो नोऽनह्नः लुक् पदान्ते, यूषभ्यां, असत्त्वाभात

आः, देवानिति न नाम। २-१-१०९ ईङौ वा अनोऽस्य लुक्, यूष्णि यूषणि। २-१-१०० मासनिशासनस्य शसादौ लुग्वा। ७-४-१०६ षष्ठ्यान्त्यस्य, मासः मासान् माभ्यां माभिः, स्थानित्वेन माद्भ्यामिति, द्वयोरह्नोर्भवो व्यह्नः ।१-४-५० संख्यासायवेरह्नस्याहन् ङौ वा, व्यह्नि व्यहनि, विगतमहो व्यह्नः, सायमन्हः सायान्हः, अत एव मलोपः। २-१-१०७ लुगातोऽनापः ङीस्याद्यघुट्स्वरे, हाहः हाहोः हाहि, धातोरिति, मुनिः। १-४-२१ इदुतोऽस्त्रेरीदूत् औता सह, मुनी, परेणापीयादेशेन नेदूत्कार्यबाध इत्यस्त्रेः ।१-४-२२ जस्येदोत् इदुतः, मुनयः। १-४-४१ ह्रस्वस्य गुणः सिनाऽऽमन्त्र्ये। ३-३-२ गुणोऽरेदोत् ऋइउवर्णानां, हे मुने, गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति स्थानिनो दीर्घत्वे मुनीन् ।१-४-२४ टः पुंसि ना इदुतः, मुनिना। १-४-२३ ङित्यदिति इदुतोरेदोतौ, मुनये। १-४-३५ एदोद्भ्यां ङसिङसो रः, मुनेः मुनेः। १-४-२५ ङिडौः इदुतः, २-१-११४ डित्यन्त्यस्वरादेः लुक्, मुनौ। लंबकर्णवत् तद्गुणसंविज्ञानात् पिता। १-४-८४ ऋदुशनस्पुरुदंशोऽनेहसश्च शेषसेर्डाः, चात् सख्युः, सखा, इतोऽनुवृत्तेः सखीः, सखीयतेः क्विप्। १-४-८३ सख्युरितोऽशावैत् शेषे घुटि, सखायौ, एकदेशेतीतः। १-४-२७ न नाङिदेत् केवलसखिपतेः, सख्या, सख्ये, बहुपत्या बहुसख्येति। १-४-३६ खितिखीतीय उर् ङसिङसोऽदितः, सख्युः, सह खेन सखः तं इच्छति सखीः। विशिष्टातिदिष्टो न प्रकृताधिकारं बाधते, क्विबन्ता धातुत्वं नोज्झन्ति शब्दत्वं च प्रतिपद्यन्ते २-१-५० धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये इतीयि प्राप्ते २-१-५६ योऽनेकस्वरस्य धातोरिवर्णस्य, सख्युः पत्युः, पतिमिच्छति पतीः पत्युः। २-१-६१ क्वादेशोऽषि असन्, लून्युः। १-४-२६ केवलसखिपतेरौः ङिः, सख्यौ, विधानादीन्। पूजितः सखा सुसखा सुसखायौ सुसखिना सुस-

सख्ये सुसखेः सुसखौ, पतिः पत्या पत्ये पत्युः पत्यौ, पताविति, लक्षणप्रतिपदोक्तयोः प्रतिपदस्येति अतिसखिः अतिसखेः। कतिबहु-वचनान्तः। १-४-५४ डतिष्णः संख्याया लुप् जश्शसोः, कति प्रियकतयः।७-४-११२ लुप्यय्वृल्लेनत् न स्थानिकार्यं इति नैत्, कतिषु। नित्यबहुवचनान्तस्त्रिः, त्रयः। १-४-३४ त्रेस्त्रयः आमः, त्रयाणाम्, अतित्रयाणामिति, द्विर्द्विवचनान्तः। २-१-४१ आद्वेरः त्यदादीनां स्यादौ तसादौ च, द्वौ द्वयोः अतिद्व्योः, वातप्रम्यः वातप्रम्यां वातप्रमी, क्विबन्तवातप्रमीशब्दे। २-१-५८ क्विब्वृत्तेरसुधियस्तौ इवर्णोवर्णयोर्य्वौ स्वरे, वातप्रम्यं वातप्रम्यि, क्विब्वृत्तेरिति परमनियौ। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी १-४-४५ दीर्घङ्याब्व्यञ्जनात् सेः लुक्।७-४-११५प्रत्ययः-प्रकृत्यादेर्विशेषणं, बहुश्रेयसी, दीर्घेति अतिखट्वः, व्यञ्जनादि-त्युखासद्, 'पदस्य' त्यस्यासत्त्वात्। १-४-४३ नित्यदिद्द्विस्व-राम्बार्थस्य ह्रस्वः सिनाऽऽमन्त्र्ये, हे बहुश्रेयसि!। १-४-२९ स्त्रीदूतः ङितां दैदास्दास्दाम्, बहुश्रेयस्यै, नित्यस्त्रीति ग्रामण्ये, बहुश्रेयसीनां बहुश्रेयस्यां, अतिलक्ष्मीः, कुमारीमिच्छन् कुमारी, क्विबन्तानां धातुत्वं शब्दत्वं चेति कुमार्यौ कुमार्यं कुमारीणां कुमार्यां, प्रध्यौ। धातौ संयोगाभावात् २-१-५२ संयोगात् धातोर्य्वोरियुव् स्वरे प्रत्यये इति नेय् उन्न्यौ, नीः नियौ। १-४-५१ निय आम् ङेः, नियां, यवक्रियौ यवक्रियि, सुधीः सुधियौ। २-१-५४ स्त्रियाः इवर्णस्य स्वरे प्रत्यये इय्, अतिस्त्रियौ अतिस्त्रयः। २-१-५५ वाऽम्शसि, अतिस्त्रियं अतिस्त्रिं अतिस्त्रिणा अतिस्त्रौ, प्रभुर्मुनिवत्, वार्णात्प्राकृतमित्युत्वे प्राप्ते २-१-५७ स्यादौ वः धातोरनेकस्वरस्य, वसुमिच्छन्तौ वस्वौ, वस्वः। १-४-९१ कुशस्तुनस्तृच् पुंसि घुटि, क्रोष्टा। १-४-३८ तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार्, क्रोष्टारौ, नान्येषामारिति स्वस्रादि, प्रस्तोतृन्नेतृद्गातृप्रतिहर्तृप्रतिस्थातृणाम-प्यारिति। १-४-९२ टादौ स्वरे वा कुशस्तुनस्तृच्, क्रोष्ट्रा

क्रोष्टुना, क्रोष्टून् इति १-४-३७ ऋतो डुर् ङसिङसोः, क्रोष्टुः, नित्यत्वान्नाम् क्रोष्टूनां। १-४-३९ अर्डौ च ऋतः, चाद् घुटि, क्रोष्टरि, हूहूः हूहौ, लुवौ लुवां, अतिचमूः अतिचम्वै, खलपूः खलप्वौ। २-१-५९ दृन्पुनर्वर्षाकारैर्भुवः वः स्वरादौ, वर्षाभ्वौ, पुनर्भ्वः, मकारे दृम्भून्, कारभ्वां, करभ्वौ काराभ्वाविति। नियमात् स्वयंभुवौ, कर्त्ता कर्त्तारौ हे कर्त्तः! कर्तृणां कर्त्तरि। पिता पितरौ, ना नरौ। १-४-४८नुर्वा नामि दीर्घः,नृणां नृणां,गौणत्वेऽपि। १-४-४० मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्र्ये, हे गार्गीमात! कॄः क्रौ क्रः, सेः सयौ सयः हे से!। १-४-७४ ओत औः घुटि· द्यौः।१-४-७५ आ अम्शसोऽता ओतः, द्याम् द्याः,सुद्याः। ।२-१-५ आ रायो व्यञ्जने, अतिराः हे अतिराः अतिराभ्याम् राये। ग्लौः ग्लावि। इति स्वरान्तपुंल्लिंगाः॥

—×—

## अथ स्त्रीलिङ्गाः।

माला।१-४-२० औता सहाप एत्, माले मालाः।१-४-४२ एदापः सिनाऽऽमन्त्र्ये, हे माले मालाः।१-४-१९टौस्येत् आपः, मालया। १-४-१७ आपो ङितां यैयास्यास्याम्, मालायै मालायाः२ मालयोः मालायाम्, बहुखट्वायै विष्टराय। आदन्तः सोमपाः सोमपः। २-४-१८आत् स्त्रियामाप्, सर्वा। १-४-१८ सर्वादेर्डस्पूर्वाः यैयास्यास्याम् आपो ङितां, सर्वस्यै सर्वस्याः सर्वासाम्, द्वितीयस्यै द्वितीयायै, अम्बा हे अम्ब हे प्रियाम्ब!, द्विस्वरेति हे अम्बाडे!, जरा जरसौ जरे जरसः जराः, आपा व्यवधानात् अतिजरे, नसः नसा नोभ्याम्, निशः निशा निज्भ्यां निच्छु, निच्छु इति, निशृशब्दे तु २-१-८७ यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः धुटि प्रत्यये पदान्ते च, छोऽपि ष इति, निड्भ्याम् निड्त्सु, मतीः मत्या ।१-४-२८ स्त्रियां ङितां वा दैदास्दाम् इदुतः, मतये मत्यै

मतेः मत्याः मतौ मत्याम्, जीवपत्यै जीवपतये, प्रियबुद्धये अतिशकट्यै च पुरुषायेत्येव । २-१-१ त्रिचतुरस्तिसृचतसृ स्यादौ स्त्रियां । २-१-२ ऋतो रः स्वरेऽनि स्यादौ एतयोः, तिस्रः तिस्रः तिसृणाम्, प्रियतिसा ना, प्रियतिस्रौ, आगमात्सर्वादेश इत्यनीति । १-४-५९ अनतो लुप् क्लीबे स्यमोः, प्रियतिसृ, अमि प्रियत्रि इति । १-४-६४ अनाम्स्वरे नोऽन्तः नाम्यन्तान्नपुंसकात् । १-४-५६ औरीः क्लीबे, प्रियतिसृणी । १-४ ५५ नपुंसकस्य शिः जश्शसोः । १-४-६५ स्वराच्छौ क्लीबे नोऽन्तः १-१-२८ शिर्घुट् क्लीबे । १-४-८५ नि दीर्घः शेषघुट्परे, प्रियतिसृणि, असिद्धत्वान्न कच्, संबुद्धौ लुचि स्थानित्वात्प्रियतिसृ, प्रियास्त्रयो यस्याः सा प्रियत्रिः, उपसर्जनत्वे ङौ घुटि चानि रविकल्प इति, जश्शसोर्नित्यं, अनि स्वरे विकल्प इति च । १-४-६२ वाऽन्यतः पुमाँष्टादौ स्वरे नपुंसकस्य, जातिशब्दवन्न गुणद्रव्यक्रियानिमित्तानां स्वनो लिङ्गं

परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेणापि वदर्थं गमयतीति पुंवत्, प्रियतिस्रा प्रियतिसृणा, द्वे द्वाभ्यां, नदी नद्यौ, इत इत्युक्तेः सखी सख्यौ सख्याः, लक्ष्मीः, स्त्री हे स्त्रि स्त्रियौ स्त्रीम् स्त्रियम् स्त्रीः स्त्रियः स्त्रियै स्त्रीणां, प्रागेव स्त्रीदूतोः कार्यं, स्त्रीमिच्छतीति स्त्रीस्तान् स्त्रियः, धातुत्वान्नित्यमिय् । अतिस्त्रिः अतिस्त्रियः अतिस्त्रिया । १-४-३० वेयुवोऽस्त्रिया ङितां दैदासूदासूदाम्, समासार्थस्य स्त्रीत्वे अन्यथेति च, अत्र दीर्घस्त्रीवर्जनात् स्त्रियां ङितामिति अतिस्त्रियै अतिस्त्रये अतिस्त्रीणां अतिस्त्रियां अतिस्त्रौ, श्रीः श्रियौ श्रियः हे श्रीः श्रियै श्रिये । १-४-३१ आमो नाम्वा इयुवः स्त्रीदूतोऽस्त्रियाः, श्रीणां श्रियां अतिश्रीणाम् अतिश्रियाम्, प्रधीर्लक्ष्मीवत्, प्रकृष्टा धीरिति प्रधीः प्रध्यं प्रध्यः, सुधीः श्रीवत्, सेनानीः सेनान्यौ सेनानीनाम्, कटप्रुवै, कटप्रुवाम् । २-१-५२ भ्रूश्नोः संयोगादोरुव्, भ्रुवौ भ्रुवः । १-४-९२ स्त्रियाम् क्रुशस्तुनस्तृच्, निर्निमित्त इति पञ्च-

क्रोष्टृभिरित्यत्र ङीनिवृत्तावपि तृज्। २-४-१ स्त्रियां नृतोऽस्वस्रादेर्ङीः कोष्ट्री, स्वसा दुहिता ननान्दा याता माता तिस्रः चतस्रः इति स्वस्रादि, विभक्तिनिमित्तयोरपि तिसृचतस्रोः पाठः सन्निपातन्यायस्यानित्यत्वार्थः, तेनातिदध्न्या या सेत्यादौ ङ्यापौ । पुनर्भूः हे पुनर्भुरिति पुनर्भू हे खलपूः। २-३-७६ कवर्गैकस्वरवति पूर्वपदरषुरुत्तरपदान्तस्यागमस्य स्यादेश्च नस्य णः, नतु पक्वस्य, पुनर्भूणाम्।स्वसा स्वसरौ माता मातरौ। इति स्त्रीलिङ्गाः॥

।१-४-५७ अतः स्यमोऽम् नपुंसकस्य, कुलं कुले कुलानि हे कुल, तृतीयादौ पुंवत्, एवं ज्ञानादयः। १-४-५८ पञ्चतोऽन्यादेरनेकतरस्य दः स्यमोः क्लीबे। १-३-५१ विरामे वाऽशिटो धुटः प्रथमः, अन्यत् अन्यद्, स्यम इति हे अन्यत्, प्रियान्यं कुलं, एकतरं अन्यतमं, अतिजरसं अमूग्रहणात् सन्निपातानित्यत्वं अतिजरं। १-४-६० जरसो वा क्लीबे स्यमोर्लुक्, अतिजरः, द्वितीयाम इति स्यमोरतिजरसमेवेति च, अतिजरसी अतिजरे। १-४-६६ धुटां प्राक् स्वरात् धुटः शौ नोऽन्तः। १-४-८६ न्स्महतोः शेषे घुटि दीर्घः, अतिजरांसि, बहुत्वाद् धुड्द्वयादपि प्राग् काष्ठतङ्क्षि, वर्णग्रहणे जातिग्रहणमित्यनित्यः, अतिजरसैः, हृदयं शसि हृन्दि हृदा, उदभ्यां उद्ने, आस्ना आसभ्यः आस्नि आसनि, आसनि इति। २-४-९७ क्लीबे ह्रस्वः, कीलालपं, एदैतोरित् ओदौतोश्चोत्, कीलालपेन। ७-४-११९ स्पर्द्धे पर इति ह्रस्वत्वं, वारि वारिणी वारीणि। १-४-६१ नामिनो लुग्वा क्लीबे स्यमोः, हे वारे पक्षे लुब् हे वारि वारिणा वारिणे वारिणाम्, निया निना नियां निनि, कुमार्यै कुमारिणे, अतिसखीनि, ।१-४-६३ दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् टादौ स्वरे, दध्ना, दध्नि दधानि प्रियदध्ना, समासान्तागमसंज्ञाज्ञापकगणनञ्निर्दिष्टान्यनित्यानीति न कच्, अनिवधानान्नागमबाधः, सुधि हे सुधि हे सुधे सुधिया सुधिना, प्रियक्रोष्टूनि प्रियकोष्ट्रा प्रियक्रोष्टुना, मृदुना मृदवे, पीलुने, कर्त्रा कर्तृणा, अतिहिना, अतिरिणा

अतिराभ्यां अतिरीणां अतिराणामिति, न्यायाः स्थविरयष्टिप्राया इति सन्निपाताश्रयणानाश्रयणे, अन्यतः क्लीबत्वाभावान्न त्र पुंवद्भावः ॥ इति नपुंसकलिंगाः ॥

अन्यव्याकरणपाठिसहाध्यायसौकर्याय हयवरलञ्ञणनमजडदगबझढधघभखफछठथचटतकपशषस इति व्यञ्जनान्तेषु क्रमः। २-१-८२ हो धुट्पदान्ते ढः, लिट् लिड् लिड्त्सु, असत्वाच्छिप्मानित्यत्र न मो वः। २-१-८३ भ्वादेर्दादेर्घो हस्य धुट्पदान्ते, धुक् धुग्। २-१ ७७ गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये, चात् पदान्ते, धुक्षु, जञ्जब्भ्याम् जञ्झप्सु, प्रत्ययेति नियमेऽपि उभयेति नियमाद् धद्ध्व इति स्यात् नतु दद्ध्व इति प्रत्यये, दामलिड्त्सु। २-१ ८४ मुहद्रुहस्नुहस्निहो वा घः धुट्पदान्ते, ध्रुक् ध्रुग् ध्रुट् ध्रुड् ध्रुक्षु ध्रुट्सु ।१-४-८२ वाः शेषे घुटि अनडुच्चतुरोरुकारस्य। १-४ ७२ अनडुहः सौ प्राग्नोऽन्तः धुटः, अनड्वान् अनड्वाहौ। १-४-८१ उतोऽनडुच्चतुरो वः आमन्त्र्ये सौ, हे अनड्वन् प्रियानड्वन् अनडुहा। २-१-६८ स्रंस्ध्वंस्क्वस्सनडुहो दः पदान्ते, अनडुद्भ्याम्, सन्तक्स् इति क्सस्, येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक इति ढत्वबाधः, अनडुत्सु। २-१-११७ दिव औः सौ, द्यौः, न स्वरानन्तर्ये स्थानीवेति आवो नासिद्धत्वं, दिवौ। २-१-११८ उः पदान्तेऽनूत्, दिवः द्युभ्यां, अनूदिति द्युभवति, निरनुबंधग्रहणान्न धातोः, चत्वारः चतुरः। १-४-३३ संख्यानां र्णां आमो नाम्, चतुर्णाम् प्रियचतुराम्। १-३-३७ न रात् स्वरे शिटो द्विः, चतुर्षु प्रियचत्वाः प्रियचत्वारौ हे प्रियचत्वः ।२-१-६७ मो नो म्वोश्च धातोः, चात् पदान्तानुवृत्तिः, प्रशान् प्रशामौ। २-१-४० किमः कस्तसादौ च थमन्ते, चात् स्यादौ कः के, साकोऽपि, अतिकिम्। २-१-३८ अयमियं पुंस्त्रियोः सौ इदमः, अयम्, अतीदं पुमान्, अयकमिति।२-१-३९ दो मः स्यादौ इदमः, इमौ। २-१-३७ टौस्यनः इदमः, अनेन इमकेन। २-१-३६

अनक् व्यञ्जनादाविदम् अद्, आद्यन्तवदेकस्मिन् आभ्यां एभिः। १-४-३ इदमदसोऽक्येव अतो भिस ऐस्, इमकैः, एवकारो नानिष्टार्था शास्त्रप्रवृत्तिरित्यस्यानित्यत्वात्। २-१-३४ इदमः अन्वादेशे ( कथितानुकथने ) द्वितीयाटौस्येनद् अवृत्त्यन्ते, उद्दिष्टोऽयं श्रुतस्कन्धोऽथो एनमनुजानीत, इमकयोः शोभनं शीलमथो एनयोर्महती कीर्तिः। २-१-३५ अद् व्यञ्जने साक इदमवृत्त्यन्तेऽन्वादेशे, इमकस्मै अथो अस्मै, एतदोऽप्यादिति, राजा। २-१-९२ नामन्त्र्ये, अनन्तरस्यैव विधिर्निषेधो वेति न नो लुक् हे राजन् राज्ञः राजनि राज्ञि। २-१-६३ भ्वादेर्नामिनो दीर्घो र्वोर्व्यञ्जने, प्रतिदीव्नः, क्वचिदिति दिवः क्वनि दिवन् दिव्ना दधिव्रज्या, नात्र धातो वौं नामी च। २-१-१११ न वमन्तसंयोगात् अनोऽस्य लुक्, तत्त्वदृश्वना। १-४-८७ इन्हन्पूषार्यम्णः शिस्योः दीर्घः शेष एव सौ, वृत्रहा वृत्रहणौ। २-१-११२ हनो ह्नो घ्नः। २-३-९४ हनो घि अन्तरे नो णो न, वृत्रघ्नः वृत्रहणि वृत्रघ्नि, प्लीहानौ, अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिरिति वाग्गमी, वाग्मिनौ, दण्डी, पूष्णा, अर्यमा।२-१-१०६ श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः, मघोनः मघवभ्याम्, श्वा श्वानः शुनः, युवानौ यूना यूनि, गोष्ठश्वेन मघवता। १-४-७६ पथिन्मथिनृभुक्षः सौ आः। १-४-७७ एः पथ्यादीनामा घुटि। १-४-७८ थो न्थ् पथिन्मथिनोर्घुटि, हे पन्थाः, पन्थानमिच्छति पथीः पथ्यौ, सुपन्थाः पन्थानः १-४-७९ इन्ङीस्वरे लुक् पथिन्मथिनृभुक्षामघुटि, पथः, सुपथि सुपन्थानि, सुपथी स्त्री कुले वा। नन्ता संख्या डतिर्युष्मदस्मच्च स्युरलिंगका इति न 'स्त्रिया' मिति ङी, पञ्च 'अष्' इति पञ्चानाम्, प्रियपञ्चा प्रियपञ्ञ्आ। १-४-५२ वाष्टन आः स्यादौ। १-४-५३ अष्ट और्जस्शसोः, अष्टौ, कृतात्वस्येति अष्टः, अष्ट प्रियाष्टौ प्रियाष्टानौ, प्रियाष्टान इत्येवेति स्भादावेवात्त्वमिचित, प्रियाष्टौ तिष्ठंति इति केचित, भूत-

पूर्वनान्तत्वान्नाम् अष्टानाम् प्रियाष्ट्नां, नात्र णत्वं स्थानित्वा-
दतः, तुण्डिप् तुण्डिभौ, सुद् सुत्, सुधौ सुत्सु । १-४-७१
युज्रोऽसमासे घुटि धुटः प्राक् नोऽन्तः, समाधावपीति ।
२-१-७१ युजञ्चक्रुञ्चो नो ङः, युङ् युञ्जौ, समाधौ तु
२-१-८६ चजः कगम् धुट्पदान्ते, युक् युग्, समासे सुयुक् सु-
युग्, खन् खञ्जौ, राड्भ्यां, तीर्थसृट्, परिव्राट् । ३-२-८१
वसुराटोः विश्वस्य दीर्घः, विश्वाराट् विश्वराजौ विश्वाराड्-
भ्याम् । २-१-८८ संयोगस्यादौ स्कोर्लुक् धुट्प्रत्यये पदान्ते,
साधुलग्, पदान्ते लुग्विधानान्नासत्त्वं, साधुलज्जौ । २-१-६९
ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो गः पदान्ते, ऋत्विग् ।
२-१-९० रात्स एव पदान्ते लुग्, ऊर्क् ऊर्जौ । २-१-४२त्तः सौ सः
आद्वेस्त्यदां, स्यः त्ये, ते तस्मै तेषाम् तस्मिन्, येषां, एते
परमैते, बहिरंगापि लुप् अंतरंगान् विधीन् बाधते इत्याद्वेरो न,
तेनात्येतदः । २-१-३३ त्यदामेनदेतदो द्वितीयाटौस्य-

वृत्त्यन्तेऽन्वादेशे, सुशीलावेतकौ तदेनौ गुरवो मानयन्ति ।
२-१-१०२ यस्वरे पादः पदणिक्यघुटि, द्विपदः, पादश-
तेः क्विपि पाद् पदः, व्यपदेशित्वेन पादन्तत्वं, द्विपाद्भ्याम् ।
४-२-४६ अञ्चोऽनर्चायां नो लुक् क्ङिति । १-४-६८
घुटि, आपादसमाप्तेरधिकारोऽयं, अपेक्षातोऽधिकारः । १-४-६९
अचः धुटः प्राक् घुटि नोऽन्तः, प्राङ् प्राञ्चः ।
२-१-१०४ अच्च् प्राग्दीर्घश्च अणिक्यघुटि यस्वरे, प्राचः
अचिति प्राञ्चः, प्रतीचः प्रत्यञ्चः, पितृचः पित्रक्षु । अमुमञ्च-
ति । ३-२-१२२ सर्वादिविष्वग्देवाड् डद्रिः क्व्यञ्चौ ।
२-१-४६ वाऽद्रौ अदसो दो मः । २-१-४७ मादुवर्णोऽनु
वर्णस्य, स्वरस्य यथामात्रं ह्रस्वोऽन्यस्य, अदमुयङ् अमु-
द्र्यङ् अमुमुयङ् अदद्र्यङ् अमुमुईचा, विष्वद्रीचा विष्व-
द्र्यग्भ्यां, नामेत्यनित्यस्तन्नात्र विषूच्याः । २-१-१०३ उदच
उदीच् अणिक्यघुटि यस्वरे प्रत्यये, उदीचा उदञ्चा । ३-

२-१२३ सहस्सम: सध्रिसमि क्‍व्यञ्चौ, सध्रीचः, समीचा । ३-२-१२४ तिरसस्तिर्यति क्‍व्यञ्चौ, तिर्यङ्, अतीति तिरश्चः । क्रुडिति 'नो व्यञ्जनस्ये'ति न नलुक्, क्रुङ्, क्रुञ्चौ, पयोमुचः पयोमुक्षु । ऋदिन्महत् । १-४-७० ऋदुदितः धुटः प्राक् घुटि नोऽन्तः, महान् महान्तौ हे महन्, पचन् पचद्भ्याम् । उदित् धीमत् । १-४-९० अभ्यादेरत्वसः सौ शेषे दीर्घः, धीमान्, मतुरुकारानुबन्ध इत्यतुना तदन्तविधिः, भूतपूर्वतया नान्तेऽपि, धीमन्तौ, गोमत्यतीति गोमान्, नात्र भ्वादिः । ४-२-९४ अन्तो नो लुक् दुव्युक्तजक्षपञ्चकस्य, जक्षत् दरिद्रत् जाग्रत् चकासत् शासत् ददद् । ५-१-१५२ त्यदाद्यन्यसमानादुपमानाद् व्याप्ये दृशष्टक्सकौ च, चात् क्विप्, सक् टिदपि । ३-२-१५२ अन्यत्यदादेराः दृग्दृशदृक्षेषु, यादृक् यादृशौ, अन्यादृक् । २-१-७० नशो वा गः पदान्ते, नक् नग् नट् नड्, तत्त्वप्राशौ तत्त्वप्राड्भ्यां, पट् पड्भ्यः षण्णां प्रियषषां । २-१-६४ पदान्ते भ्वादेर्नामिनो र्वोर्दीर्घः, पिपठीः पिपठीष्षु, चिकीः चिकीर्षु, दोः दोष्णः दोष्णि दोषाणि । संतक्वसिति विद्वान् विद्वांसौ । २-१-१०५ क्वसुष्मतौ च यस्वरे आणिक्यघुटि, विदुषः विद्वत्सु, सेदिवान् यदागमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति सेट्क्वसो-रुष् सेदुषः, साहचर्यात्सदृशस्यैव सुहिन् सुहिंसौ । १-४-७३ पुंसोः पुमन्स् घुटि, पुमान् प्रियपुमांसौ पुंसु, उशना: उशनसौ । १-४-८० वोशनसो नश्चामन्त्र्ये सौ लुक् च, हे उशनन् हे उशनः हे उशन, सर्ववेधाः । २-१-४३ अदसो दः से-स्तु डौः सः । २-१-४४ असुको वाऽकि सौ, असुकः असकौ असौ, सिनाऽसुक्कसिति । २-१४५ मोऽवर्णस्य अदसो दः, अमू । २-१-४९ बहुष्वेरीः अदसो मात्, अमी अमुके । २-१-४८ प्रागिनात् अदसो मादुवर्णः, अमुना अत्यदाः अत्यदसा, अमुष्मात् अमीषु । श्रेयान् श्रेयांसौ । इति व्यञ्जनान्तपुंलिङ्गाः

२-१-८५ नहाहोर्धतौ धुटि प्रत्यये पदान्ते च, परीणत् परीणद्भ्याम् परीणहः, उष्णिग्भ्याम्, गीः गीर्भ्याम् गिरः गीर्षु, चतस्रः निर्देशाद् रः, चतसृणां, का के, इयं इमे इमाः अनया, प्रागद् पश्चात् डस् अस्याः, स्रक् स्रग् स्रक्षु, एषा एतासां, वाग्भ्यां वाक्षु । १-४-८८ अपः शेषे घुटि दीर्घः, आपः, बहुवचनोऽयं । २-१-४ अपोऽद् भे स्यादौ, अद्भिः, स्वापः स्वद्भ्याम् स्वप्सु, बह्वपा इत्यत्र न, व्यवधानात्, दिक् दिग्, दृग्भ्याम् दृक्षु, त्विषा त्विड्त्सु त्विड्सु। २-१-७२ सजुषः पदान्ते रुः, सजूः, नित्यादन्तरङ्गमिति प्राग्दीर्घः, सजूर्भ्याम् सजूष्षु सजूःषु, आशिषा आशीष्षु, असौ अमू अमूः अमुया अमुयोः अमूषाम् अमुष्याम्। इति व्यञ्जनान्तस्त्रीलिंगाः ।

स्वनडुत् स्वनडुही स्वनड्वांहि, विमलद्यु दिनं, अन्तवर्तिन्या विभक्तेः स्थानिवद्भावेन 'उः पदान्ते' इति प्राप्ते १-१-२५ वृत्त्यन्तोऽसषे न पदं, समासादि वृत्तिः, षत्वप्राप्तौ पदसंज्ञैव तेन दधिसेक् इत्यत्र पदादित्वान्न पः, 'नाम सिदय्' इत्यत्र प्रकृत्या समुदायस्य निवृत्तिर्नावयवस्येति न सितां गतार्थता, विमलदिवी विमलदिवि, चत्वारि, वारी वारि, इदम् इमानि अन्वादेशे एनत्, एनम् इति, एने अस्य, अहः अहनी अह्नी अहानि अहोभ्यां, दीर्घाहाः रोऽसत्त्वात् 'नि दीर्घः', दीर्घाह्वा, दाम दाम्नी दामानि । २-१-९३ क्लीबे वाऽऽमन्त्र्ये नलुक् हे दाम हे दामन्, औणादिकः असृक् असृग् असृञ्जि असानि असृजा अस्ना असृक्षु अससु। १-४-६७ लौ वा घुटि धुटः प्राग् नोऽन्तः, बहुर्जी बहुर्ञ्जि। सर्वेभ्यो लोप इति लुवि यद् ये यानि, एतद् एते एतानि एतस्मै अन्वादेशे एनत् एनानि, तिर्यग् तिर्यक् तिरश्ची तिर्यञ्चि, अर्चायां तिर्यङ् तिर्यञ्ची तिर्यञ्चि, यकृत् यकानि यक्ना, शकृन्ति शकभ्यां, जक्षती। ४-२-९५ शौ वा द्व्युक्तजक्षपञ्चकस्यान्तो नो लुक्, जक्षति जक्षन्ति, भात् । २-१-११५ अवर्णादश्नोऽन्तो वाऽतुरीङ्योः, भान्ती भाती, पूर्वमेवान्तः

दीर्घत्वे तु भूतपूर्वकस्तद्वदुपचार इति । २-१-११६ इयशवः अतुरन्त ईङ्योः, भवन्ती भवन्ति, दीव्यन्ती दीव्यता। १-४-८९ नि वा अपो दीर्घः, बह्वाम्पि बह्वम्पि, बहुः बहुंपि, सर्पिः सर्पिपी न्सिति सर्पींपि, पत्वस्य असत्त्वात्, पर्वाणि णत्वमसत्, पिपठीः पिपठिपी अतः स्थानित्वात्स्वविधावस्थानित्वात् पिपठिंपि, सुपुम् सुपुंसी सुपुमांसि, अदः अमू अमूनि। इति व्यञ्जनान्तनपुंसकलिंगाः

अथ युष्मदस्मदौ त्रिपु सरूपौ, युष्मदस्मदोरधिकारः २-१-१२ त्वमहं सिना प्राक् चाकः, अन्तरङ्गाच्चानवकाशमिति १३-१४-१५ सूत्रं यावत्, त्वं अहं त्वकम्, अत्यहं लुप्यपि । २-१-१० मन्तस्य युवावौ द्वयोः, अमन्ते ओसि युव्योः । २-१-१६ अमौ मः, अकारोऽलाक्षणिकः। २-१-६ युष्मदस्मदोः व्यञ्जनादिप्रत्यये आः, युवाम् आवाम् । २-१-१३ यूयं वयं जसा, यूयं वयं वयकं। २-१-११ त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् मान्तयोः, लुबन्तरङ्गेभ्यो बलवतीति प्रेत्यादि, त्वदीयः त्वत्कृतं, त्वाम् माम् युवाम् आवाम्। २-१-१७ शसो नः, युष्मान् अस्मान्। २-१-७ टाङ्योसि यः, त्वया मया युवाभ्यां आवाभ्यां युष्माभिः अस्माभिः । २-१-१४ तुभ्यं मह्यं ङ्या, तुभ्यं मह्यं युवाभ्यां आवाभ्यां। २-१-८ शेषे लुक् अनाये स्यादौ, अलिङ्गे युष्मदस्मदी इति नादाप् स्त्रीलिङ्गे। २-१-१८ अभ्यम् भ्यसः, स्थानित्वादतो न २-१-९ मोर्वा शेपे स्यादौ लुक् । युष्मभ्यम् अस्मभ्यं। २-१-१९ ङसेश्चात् चात् पञ्चमीभ्यसः, त्वत् मत् युवाभ्यां आवाभ्यां युष्मत् अस्मत्। २-१-१५ तव मम ङसा, तव मम युवयोः आवयोः। २-१-२० आम आकम्, युष्माकम् अस्माकम्, आः ण्यन्तार्थे युपाकम् असाकम्, अतियुष्मयामिति। त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु।२-२-१२२ अविशेषणे द्वौ चास्मदः बहुवद्वा, चादेकः, अहं आवां वयं । समस्य-

माने द्व्येकत्ववाचिनी युष्मदस्मदी । समासार्थोऽन्यसंख्यश्चेत्, स्तो युवावौ त्वमावपि ॥ १ ॥ सिजस्ङेङस्सु परत, आदेशाः स्युः सदैव ते । एते परत्वाद्बाधन्ते, युवावौ च त्वमावपि ॥ २ ॥ द्व्येकसंख्यः समासार्थो, बह्वर्थे युष्मदस्मदी । तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ च न ॥ ३ ॥ त्वमहमादयस्तु स्युरेव । त्वां मां युवां आवां वा अतिक्रान्तः अतित्वं अत्यहं अतियुवां अत्यावां अतियूयं अतिवयं अतित्वां अतिमां अतियुवां अत्यावां अतित्वान् अतिमान् अतियुवान् अत्यावान्, युष्मानस्मान्वा अतित्वं अत्यहं अतियुष्मां अत्यस्मां अतियुष्मभ्यं अत्यस्माकं अतियुष्मयि अत्यस्मासु । त्वमिवाचरति त्वद्यते, त्वामाचष्टे त्वदयति, 'नाम्नोऽस्य ञ्णिति वृद्धि'रिति त्वापयति, अत एव त्वचः त्वाचयति,

सौ त्वां मां त्वं मं वा, क्विपि त्वाप् माप् च इति, युवाम् युष्मान् वा आवामस्मान्वाऽऽचष्टे णिचि क्विपि तल्लुकि च युष्म् अस्म्, त्वं अहं युवां आवां यूयं वयं त्वां मां युवां आवां युषान् असान् युष्मा अस्या युवाभ्यां आवाभ्यां युषाभिः असाभिः तुभ्यं मह्यं युष्मभ्यं युषभ्यं अस्मभ्यं असभ्यं युष्मद् युषद् अस्मद् असद् तव मम युष्माकं युषाकं अस्माकं असाकं युष्यि अस्यि युष्योः अस्योः युषासु असासु, यत्वेऽनित्ये त्व्या म्या त्व्यि म्यि युव्योः आव्योः, सकृद्बाधितं बाधितं चेत् त्वेन मेन युवयोः आवयोः त्वे मे, क्विबर्थे प्रकृतिराहेति त्वस्मै मस्मै इत्यादि। १-१-२६ सविशेषणमाख्यातं वाक्यं, धर्मं शृणु, त्याद्यन्तं पदमाख्यातं, यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते, गम्यमानेऽपि, अस्तीत्युपलक्षणं । २-१-२१ पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे। २-१-२२ द्वित्वे वाम्नौ पदाद्युग्विभक्त्यैकवाक्ये। २-१-२३ ङेङसा ते मे पदादेकवाक्ये। २-१-२४ अमा त्वा मा पदादेकवाक्ये, धर्मः त्वा मा वां नौ वो नो वा रक्षतु, शिवं ते मे वां नौ वो नो वा दयिते, ज्ञानं ते मे वां नौ वो नो वा स्वं, स्वस्ते गृहं, अतितुभ्यं इत्यादौ न

। २-१-२५ असदिवामन्त्र्यं पूर्वं, श्रमणा युष्मान् रक्षतु धमः, ग्रामाश्चैत्र ! ते स्वमित्यादौ ग्रामाद्यपेक्षया तु स्यात् नित्यं, उत्तरे तु स्यादेव। २-१-२६ जस् विशेष्यं वाऽऽमन्त्र्येऽसद् विशेषणे परे, जिनाः शरण्या युष्मान् वो वा शरणं प्रपद्ये । २-१-२७ नान्यत् विशेषणपरे विशेष्ये पूर्वे असदिव, साधू सुविहितौ वां शरणं प्रपद्ये। २-१-२८ पादाद्योः न वस्नसादयः, वीरो विश्वेश्वरो देवो, युष्माकं कुलदेवता । २-१-२९ चाहहवैवयोगे न वसाद्याः, ज्ञानं तुभ्यं च दीयते, ज्ञानं शीलं च वो रक्षतु, नात्र योगश्चस्य युष्मदा। २-१-३० दृश्यर्थैश्चिन्तायां धातुभिः, जनो मामपेक्षते । २-१-३१ नित्यमन्वादेशे वसाद्याः, त्वं विद्वानथो ते क्षमाश्रमणैर्ज्ञानं दीयते। २-१-३२ स (विद्यमान)-पूर्वात् प्रथमान्ताद्वा वसाद्याः अन्वादेशे, धनवांस्त्वमथो लोकस्त्वा त्वां वा पूजयति ॥ इति युष्मदस्मदी ॥

१-१-३० स्वरादयोऽव्ययं, सत्त्वासत्त्वयोर्यन्न व्येति तदव्ययं, संज्ञाविधौ ग्रहणवति नाम्नि च तदन्ताविधेर्निषेधेऽपि अत्र 'विशेषणमन्त' इत्यनेन परमोच्चैः इत्याद्याः तदन्तास्तथैव, स्वर् ( स्वर्गः ) अन्तर् ( मध्ये ) प्रातर् ( प्रभातं ) पुनर् सायम् नक्तम् ( रात्रिः ) अस्तम् दिवा ( दिनं ) दोषा ( रात्रिः ) ह्यस् ( अतीतं दिनं ) श्वस् ( आगामि ) शम् ( सुखं ) विहायसा ( आकाशं ) ओम् भूस् ( तिर्यक् ) भुवस् ( अधोलोकः ) स्वस्ति कल्याणं ) समया-निकषा ( पार्श्वे ) अन्तरा (मध्ये) पुरा बहिस् अधस् असांप्रतं ( अयोग्यं ) अद्धा ( कालः ) ऋतं ( सत्यं ) मुधा-मृषा-वृथा ( मिथ्या ) मिथो ( परस्परं ) अनिशम् (नित्यं) मुहुस् अभीक्ष्णं ( पुनः पुनः ) मंक्षु--झटिति ( शीघ्रं ) उच्चैस् नीचैस् शनैस् अवश्यं विष्वक् ( सर्वतः ) द्राक् स्राक् पृथक् धिक् मनाक् ( स्तोकं ) ईषत् तूष्णीम् ( मौनं ) कामं ( अत्यन्तं ) वरम् आराद् ( दूरमासन्नं च ) तिरस् नमस् भूयस् ( पुनः २ ) प्रायः स्वयं अलं ( वारणशोभापर्याप्तिषु ) कु अतीव सुष्ठु दुष्ठु

ऋते ( विना ) सपदि ( शीघ्रं ) साक्षात् नाना ( अनेकः ) विना सहसा युगपत् ( सहैव ) शश्वत् पुरस् ( अग्रे ) आविस्-प्रादुस् (प्रकटं)। बहुवचनादिशब्दात् आकृतिगणोऽयं, तेनान्येऽपि। वाच-का इमे, न चादिवद् द्योतकाः। १-१-३१ चादयोऽसत्त्वेऽव्ययं सत्त्वं लिंगसंख्यावद् द्रव्यं परामृश्य इतियावत्, निपाता इत्यपि, अव्ययीभावस्यापि क्वचिदव्ययत्वाच्चैत्यस्योपकुंभमित्यत्र 'तृप्ता-र्थपूरणाव्यये' ति समासनिषेधः अक्मागमनिषेधश्च। च वा एव एवम् नूनं चेत् नहि हन्त ( खेदे ) मा न नञ् वषट् स्वधा स्वाहा हि अथ अथो नो भोस् भगोस् अघोस् हंहो अहो हा ही हे है अयि रे अरे ननु उञ् उत बत इव तु नु ( वितर्के ) किमुत किल आहोस्वित् उदस्वित् नवा खलु यदि नाम यदुत प्रत्युत ( विपरीतं ) जातु ( कदाचित् ) यावत् तावत् दिष्ट्या ( हर्षे ) इतिह ( परंपरा ) सह अमा समम् सत्रा साकम् सार्धम्। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ आत। उपसर्गाः— प्र परा अप सम् अनु अव निस् निर् दुस् दुर् आङ् नि वि प्रति परि उप अधि अपि सु उद् अति अभि, निस्दुसो रुत्वा-सत्त्वान्निरयते दुरयते, बहुवचनान्तादिशब्दादन्येऽपि। १-१-३३ विभक्तिथमन्ततसाद्याभाः अव्ययसंज्ञाः, अहंयुः शुभंयुः कुतः यथा तथा कथं। अहं शुभं१ कृतं पर्याप्तं२ येन तेन चिरेण अचिरेण ३ ते मे चिराय अह्नाय ४ चिरात् अकस्मात् ५ चिरस्य अन्योऽन्यस्य मम६ एकपदे अग्रे प्रगे (प्रातर्) प्राह्णे हेतौ रात्रौ वेलायां मात्रायां ७ अस्ति नास्ति आह आदह आदंक आतंक। १-१-३२ अधणत्स्वाद्याशसः अव्ययसंज्ञाः। ७-२-८१व्याश्रये तसुः पक्षे गम्ये षष्ठ्यन्तात्, देवा अर्जुनतोऽभवन्। ७-२-८२ रोगात्प्रतीकारे, प्रवाहिकातः कुरु। ७-२-८३ पर्यभेः सर्वोभये, परितः अभितः। ७-२-८४ आद्यादिभ्यः संभवद्विभक्त्यन्तेभ्यः, आदितः, मध्यान्ताग्रवक्षःपार्श्वपृष्ठमुखसर्वविश्वोभयान्यपूर्वैकेदं-प्रमाणस्वरवर्णशब्दाभिधानयत्तदः, पृषोदरादित्वाद् दलोप एषु।

७-२-८५ क्षेपातिग्रहाव्यथेष्वकर्तुस्तृतीयायाः, वृत्तेन क्षिप्तः वृत्ततः । ७-२-८६ पापहीयमानेन योगेऽकर्तृवाचिनष्टान्तात्, वृत्ततः पापं हीयते वा । ७-२-८७ प्रतिना पंचम्याः, अभिमन्युरर्जुनतः प्रति । ७-२-८८ अहीयरुहोऽपादाने, चौरतो बिभेति, नात्र-ऋते धर्मात् कुतः सुखं ? । ७-२-८९ किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्तस् पंचम्याः, प्कारः पुंवद्भावार्थः, कस्या इति कुतः सर्वतः विश्वतः यतः ततः बहुतः । ७ २-९० इतोऽतः कुतः सर्वविभक्तिषु । ७-२-९१ भवत्वायुष्मद्दीर्घायुर्देवानांप्रियैकार्थात्, ततो भवान् ततो भवतः कुतः देवानांप्रियः । ७-२-९२ त्रप् च, तत्र भवान् ततो भवति, भवदाद्ययोगेऽपि त्रप्तसाविति । ७-२-९३ क्वकुत्रात्रेह, भवदादियोगेऽप्येते, क्व भवान् । ७-२-९४ सप्तम्याः, कस्मिन् इति कुत्र, बह्वीषु बहुत्र । ७-२-९५ किंयत्तत्सर्वैकान्यात्काले दा, कस्मिन् काले कदा । ७-२-९६ सदाऽधुनेदानींतदानीमेतर्हि काले । ७-२-९७ सद्योऽद्यपरेद्यव्यह्नि, समानेऽह्नि सद्यः । ७-२-९८ पूर्वापराधरोत्तरान्यान्यतरेतरादेद्युस् अह्नि, पूर्वेऽहनि पूर्वेद्युः । ७-२-९९ उभयाद् द्युश्च अह्नि, उभयेद्युः उभयद्युः । ७-२-१०० ऐषमःपरुत्परारि वर्षे, ( इदं-पूर्व-परे ) । ७-२-१०१ अनद्यतने र्हिः, कर्हि, किंयत्तदेतदन्येभ्य एवेति । ७-२-१०२ प्रकारे था किमादेः, सर्वेण प्रकारेण सर्वथा । ७-२-१०३ कथमित्थं प्रकारे । ७-२-१०४ संख्याया धा प्रकारे, द्विधा । ७-२-१०५ विचाले च संख्याया धा, (संख्यान्तरे) द्विधा । ७-२-१०६ वैकाद् ध्यमञ् । ३-३-१ वृद्धिरारैदौत् अक्ऋइउवर्णानां । ७-४-१ वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते, ऐकध्यं एकधा । ७-२-१०७ द्वित्रेर्धमञेधौ वा प्रकारे विचाले च, द्वैधं द्वेधा । ७-४-६८ अवर्णेवर्णस्य तद्धिते लुक् । ७-२-१०९ वारे कृत्वस् संख्यायाः, पंचकृत्वः । ७-२-११० द्वित्रिचतुरः सुच् वारे, द्विः चतुः । ७-२-१११ एकात्सकृच्चास्य वारे, सकृद् भुंक्ते । ७-२-११२ बहोर्धाऽऽसन्ने वारे, बहुधा भुंक्ते पिबति वा, कृत्वे-

ऽपि गणधा तावद्धेति। ७-२-११३ दिक्शब्दाद् दिग्देशकालेषु प्रथमापंचमीसप्तम्या धा स्वार्थे, प्राची दिग् रमणीया। ७-२-१२३ लुबञ्चेः धा एनो वा विहितस्तस्य। २-४-९५ ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः लुक् इति ङीलुक्। ७-४-११६ गौणो ङ्यादिः ष्यान्तसमुदायस्य विशेषणं द्वंद्वैकत्वाव्ययीभावौ क्रियाव्ययविशेषणे इति नपुंस्त्वं, प्राग्रमणीयं देशः कालो वा। ७-२-११४ ऊर्ध्वाद्रिरिष्टातावुपश्चास्य दिगादौ प्रथमादेः, उपरि उपरिष्टात्। ७-२-११५ पूर्वावराधरेभ्योऽसस्तातौ पुरवधश्चैषाम् ,अधः अधस्तात्। ७-२-११६ परावरात्स्तात्। ७-२-११७ दक्षिणोत्तराच्चातस्, परतः उत्तरतः। ७-२-११८ अधरापराच्चात् , दक्षिणात्। ७-२-१२४ पश्चोऽपरस्य दिक्पूर्वस्य चाति, पश्चात् दक्षिणपश्चात्। ७-२-११९ वा दक्षिणात्प्रथमासप्तम्या आः दिग्देशयोः, दक्षिणा। ७-२-१२० आही दूरे प्रथमासप्तम्याः, दक्षिणा दक्षिणाहि। ७-२-१२१ वोत्तरात् आही, उत्तरा उत्तराहि। ७-२-१२२ अदूरे एनः दिग्देशकालेषु प्रथमासप्तम्याः, पूर्वेण, उक्ता अपि सामान्यविवक्षायां अदूरेऽपि भवन्ति, दक्षिणोत्तराधरेभ्य एवेति। ७-२-१२६ कृभ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः, करोतिकर्मणो भ्वस्तिकर्तुश्च। ४-३-१११ ईश्च्वाववर्णस्यानव्ययस्य, अशुक्लं शुक्लं करोति शुक्लीकरोति शुक्लीभवति शुक्लीस्यात्। ७-२-१२७ अरुर्मनश्चक्षुश्चेतोरहोरजसां लुक् च्वौ। ४-३-१०८ दीर्घश्च्वियङ्यक्क्येषु च, चादाशिषि यि, च्विक्येति धात्वधातोः, बहुवचनात् क्यनादिः। वर्ज्यं चेदं लोपात्स्वरादेशन्याये तेन चिकीर्ष्यते, अत्राल्लोपो न दीर्घः, अरूकरोति मनीभवति रजीस्यात्। ७-२-१२८ इसुसोर्बहुलं लुक् च्वौ, सर्पीकरोति। ७-२-१२९ व्यञ्जनस्यान्त ईः बहुलं, दृषदीभवति। ७-२-१३० व्याप्तौ स्सात् कृभ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे, अग्निसात् करोति काष्ठम्। ७ २-१३१ जातेः संपदा

च, उदकसाद् करोति भवति स्यात् संपद्यते वा लवणं। ७-२-१३२ तत्राधीने, आचार्यसात् संपद्यते। ७-२-१३३ देये त्रा च सप्तम्यन्तात् कृभ्वस्तिसंपदियोगेऽधीने, गुरावधीनं देयं करोति गुरुत्राकरोति। ७-२-१३४ सप्तमीद्वितीयाद्देवादिभ्यः वा त्रा स्वार्थे, देवत्रा वसति देवत्रा करोति। ७-२-१३५ तीयशम्बबीजात्कृगा कृषौ डाच्, द्वितीयाकरोति क्षेत्रं। ७-२-१३६ संख्यादेर्गुणात् कृगा योगे कृषौ डाच्, द्विगुणाकरोति। ७-२-१३७ समयाद्यापनायाम् ( कालहरणे )। ७-२-१३८ सपत्रनिष्पत्रादातिव्यथने। ७-२-१३९ निष्कुलान्निष्कोपणे (अवयवनिष्काशनं)। ७-२-१४० प्रियसुखादानुकूल्ये। ७-२-१४१ दुःखात्प्रातिकूल्ये। ७-२-१४२ शूलात्पाके। ७-२-१४३ सत्यादशपथे। ७-२-१४४ मद्रभद्राद्वपने ( मंगले ) भद्राकरोति। ७-२-१४५ अव्यक्तानुकरणादनेकस्वरात् कृभ्वस्तिनाऽनितौ द्विश्च प्रकृतिः चात् डाच्, पटपटास्यात्। ७-२-१४६ इतावतो लुक् अव्यक्तानुकरणस्यानेकस्वरस्य, पटत् इति पटिति। ७-२-१४७ न द्वित्वे तस्यातो लुक् इतौ। ७-२-१४८ तो वा तस्य द्वित्वे इतौ लुक्, पटपटेति पटत्पटादिति करोति। ७-२-१४९ डाच्यादौ तस्य तो लुक् द्वित्वे, पटपटाकरोति। ७-२-१५० बह्वल्पार्थात् कारकादिष्टानिष्टे प्शस्, बहुशो भुक्तमतिथिभिर्विवाहे। ७-२-१५१ संख्यैकार्थाद् वीप्सायां शस् कारकनाम्नः। १-१-३९ डत्यतु संख्यावत्। १-१-४० बहुगणं भेदे, कतिशः गणशः पंक्तिशः। १-१-३४ वत्तस्याम् अव्ययं, । ७-१-५१ तस्यार्हे क्रियायां वत्, साधुवद् वृत्तं। ७-१-५२ स्यादेरिवे वत् क्रियार्थे, चैत्रवद्याति देववन्मुनिं नमति। ७-१-५३ तत्र इवे वत्, स्रुघ्नवत् परिखा साकेते। ७-१-५४ तस्य इवे वत्, चैत्रवद्भावः। ६-३-२११ तसिः टस्तुल्यदिशि, हिमवतैकदिक् हिमवत्तः। ७-३-८ किंत्याद्येऽव्ययादसत्त्वे तयोरन्तस्याम्, तरप्तमपोः। ७-३-५ प्रकृष्टे तमप् गुणक्रिययोः, प्रकर्ष-

यतोऽपि श्रेष्ठतमः। ७-३-६ द्वयोर्विभज्ये च तरप्, चात् प्रकृष्टे, पटुतरः। ७-३-७ क्वचित् स्वार्थे तरप्, किंतराम् किंतमाम् पचतितराम् पचतितमाम् पूर्वाह्णेतराम् नितराम्। ३-४-४६ धातोरनेकस्वरादाम् परोक्षायाः कृभ्वस्ति चानु तदन्तं, चकासांचकार, अव्ययत्वे मोऽनुस्वारः। १-१-३५ क्त्वा-तुमम्, अव्ययं। ३-२-१५४ अनञः क्त्वो यप्, प्रणम्य। ५-४-४४ निषेधेऽलंखल्वोः क्त्वा वा उपपदयोर्धातोः, अलंकृत्वा, खलुकृत्वा। ५ ४-४५ परावरे गम्ये धातोः क्त्वा वा, बाल्यमति-क्रम्य यौवनं। ५-४-४६ निमील्यादिमेङस्तुल्यकर्तृके क्त्वा वा, नेत्रे निमील्य हसति, व्यतिहारे मेङ्, अपमाय अपमित्य वा याचते, प्रतिदातुं याचते, याचित्वो मेङ्क्त्वोक्तत्वं। ५-४-४७ प्राक्काले तुल्यकर्तृके धातोः क्त्वा, भुक्त्वा व्रजति, यदनेन भुज्यते ततोऽयं पचतीत्यत्र तु प्राक्कालताऽभिहिता ततःशब्देन। ५-४-४८ ख्णम् चाभीक्ष्ण्ये प्राक्काले तुल्यकर्तृके धातोः क्त्वा च, प्रत्य-

यान्तरनिषेधाय चः, प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् तत ओदनं पक्त्वा भुङ्क्ते देवदत्त इत्यत्र न कर्त्तरि तृतीया भावे क्त्वि, भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा। ७-४-७३ भृशा-भीक्ष्ण्याविच्छेदे द्विः प्राक्तमबादेः। ५-४-५४ विद्दृग्भ्यः कार्त्स्न्ये णम्, अतिथिवेदं भोजयति। ५-३-१३ क्रियायां क्रिया-र्थायां तुम्णकच्भविष्यन्ती। ३-२-१४० तुमश्च मनः-कामे लुक्, चात्समः, भोक्तुकामो व्रजति, भोजको व्रजति, भोक्ष्य इति व्रजति, णकवचनान्नासरूपविधिना तृजाद्याः। १-१-३६ गतिः अव्ययं, कृत्रिमाकृत्रिमयोः कृत्रिमे। ३-१-१ धातोः पूजार्थस्वातिगतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च, पर्यानीतं, धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ॥१॥ साधनप्रत्ययात्पूर्वमेव धातुनैषां संबंधः, संचस्कार, प्रतीक्षते अधीते प्राणिति विजयते, आपञ्चभ्य उपसर्गाः, संज्ञा न संज्ञान्तरबाधिकेति न गत्या बाधः।

३-१-२ऊर्यादिच्विडाचश्च गतिः धातोः संबंधिनः प्राक् चैते, चादुपसर्गाः, ऊरी उररी उररी भृशाङ्गीकारप्रशंसासु, सजूः सहार्थे, श्रौषट् वौषट् वषट् स्वाहा स्वधा देवतासंप्रदानदानमात्रयोः, श्रत् श्रद्धेति शीघ्रे च, प्रादुस् आविस् प्राकाश्ये इत्यादय ऊर्याद्याः, ऊरीकृत्य पटत्कृत्य शुक्लीकृत्य पटपटाकृत्य, कृभ्वस्तियोगे सर्वे श्रत्तु करोतिदधातिभ्याम्। ३-१-३ कारिका स्थित्यादौ, कारिकाकृत्य, स्थितिं यत्नं क्रियां वा कृत्वेत्यर्थः। ३-१-४ भूषादरक्षेपेऽलंसदसत् गतिः, सत्कृत्य ३-१-५ अग्रहानुपदेशेऽन्तरदः गम्ये, अदःकृत्य। ३-१-६ कणे मनस्तृप्तौ, कणेहत्य। ३-१-७पुरोऽस्तमव्ययम्, पुरस्कृत्य। ३-१-८ गत्यर्थवदोऽच्छः, अच्छगत्य अच्छोद्य। ३-१-९ तिरोऽन्तर्धौ, तिरोभूय। ३-१-१० कृगो नवा तिरोऽन्तर्धौ, तिरस्कृत्य तिरः कृत्वा। ३-१-११ मध्येपदेनिवचनेमनस्युरस्यनत्याधाने गतिः कृगो वा, उपश्लेषे आश्रये वा न चेत्, उरसिकृत्य उरसिकृत्वा। ३-१-१२ उपाजेऽन्वाजे बलाधाने, उपाजेकृत्य उपाजेकृत्वा। ३-१-१३ स्वाम्येऽधिः, । ३-१-१४ साक्षादादिश्च्व्यर्थे, साक्षात् मिथ्या चिन्ता भद्रा अमा आस्था अर्थे अग्नौ वशे विकपने विसहने लवणं उष्णं शीतं उदकं आर्द्रं प्रादुस् आविस् नमस् ।३-१-१५ नित्यं हस्तेपाणावुद्वाहे। ३-१-१६ प्राध्वं बन्धे, प्राध्वंकृत्य। ३-१-१७ जीविकोपनिषदौपम्ये गतिः कृगः, उपनिषत्कृत्य। ३-२-७ अव्ययस्य स्यादेर्लुक्, अत्युच्चैसौ अत्युच्चैसः नात्र लुबन्यार्थत्वात्। ३-२-१५६ वाऽवाप्योस्तनिक्रीधाग्नहोर्वपी, अवतंसः वतंसः वक्रयः पिधानं पिनद्धं वग्रहः इत्यव्ययानि ॥

२—४—१६ अजादेः स्त्रियां आप्, अजा एडका अश्वा चटका मूषिका कोकिला ( जातयः ) बाला होडा पाका वत्सा मन्दा विलाता कन्या मध्या मुग्धा (अवस्थाः) ज्येष्ठा कनिष्ठा मध्यमा ( वयुक्ताः ) पूर्वापहाणा

(टित्) त्रिफला ( द्विगुः ) कुंचा उष्णिहा देवविशा ( व्यञ्जना-न्ताः ) तदन्तान्महाजा । राज्ञी कर्त्री। २-४-२ अधातूदृदितः ङीः, विदुषी पचन्ती अतिमहती अतिपुंसी। २-४-५६ असत्कां-ड्प्रान्तशतैकाञ्चः पुष्पात् स्त्रियां ङीर्जातेः। २-४-८६ अस्य ङ्यां लुक्, शंखपुष्पी, सत्पुष्पा प्राक्पुष्पा।२-४-५७ असं-भस्त्राजिनैकशणपिण्डात् फलात् जातेर्ङीः, पूगफली, संफला पिण्डफला। २-४-५८ अनञो मूलात् ङीर्जातेः, दर्भमूली, अ-मूला । २-४-३ अञ्चः ङीः, प्राची उदीची अपाची। २-३-१०५ जपादीनां पो वः, अवाची । २-४-४ णस्वराघोषाद् ( वि-हितस्य ) वनो रश्च ङीः,(ओणृ) अवावरी (स्वर) शर्वरी ( अ-घोष ) मेरुदृश्वरी । यज्वा, नात्र नृतो ङीः । २-४-५ वा बहु-व्रीहेः वनो ङी रश्च, बहुधीवा बहुधीवरी । निरनुबंधेत्यानित्यः ।२-४-६ वा पादः, द्विपदी द्विपात्। ७-३-१५०सुसंख्यात् पा-दस्य पात्। २-४-७ ऊध्नः। ७-३-१६९ स्त्रियामूधसो न्, म-होध्नी । २-४-८ आशिशोः, आशिश्वी। २-४-९ संख्यादेर्हाय-नाद्वयसि । २-३-७४ चतुस्त्रेर्हायनस्य वयसि णः, चतुर्हा-यणी गौः । २-४-१० दाम्नः संख्यादेः, द्विदाम्नी । २-४-११ अनो वा उपान्त्यलोपिनः, बहुराज्ञी बहुराजा । २-४-१२ ना-म्नि अनः, अधिराज्ञी ग्रामः । २-४-१३ नोपान्त्यवतः अनो बहुव्रीहेर्ङीः, सुपर्वा । २-४-१४ मनः, अतिमहिमा । २-४-१५ ताभ्यां वाप् डित् अन्नन्ताद्बहुव्रीहेर्मन्नन्ताभ्नाम्नः, सीमानौ सीमे, एकानुबंधे न द्व्यनुबन्धकस्येत्यस्यानित्यत्वादेदापः, सुपर्वे सुपर्वाणौ बहुराजे बहुराज्यौ । २-४-१७ ऋचि पादः पात्पदे, द्विपात् द्विपदा। २-४-१०७ इचापुंसोऽनित्क्याप्परे, चाद् ह्-स्वो वा, खट्विका खट्वाका खट्वका, सर्विका अखट्विका। २-४-१०४ ङ्यादीदूतः के ह्स्वः, सोमपिका । २-४-१०५ न कचि ह्स्वः। २-४-१०६ नवाऽऽपः ह्स्वः कचि, प्रियखट्वाका प्रियख-ट्वका, कम्रि दुर्गका । २-४-१०८ स्वज्ञाजभस्त्राऽधातुत्य-

यकात्, स्विका स्वका भस्त्रिका भस्त्रका इभ्यिका इभ्यका मूपकिका मूषकका। सुशयिका, इहत्यिकेत्येव। २-४-१०९ द्व्येषसूतपुत्रवृन्दारकस्य वा, द्वके द्विके। २-४-११० वौ वर्तिका वा। २-४-१११ अस्यायत्तत्क्षिपकादीनां अनित्क्यापरे इः, कारिका, तन्मध्य इत्यानित्य इत्ययदित्यादि। २-४-११२ नरिका मामिका। २-४-११३नारकावर्णकाष्टका ज्योतिस्तान्तवपितृदैवत्ये। २ ४-१९ गौरादिभ्यो मुख्यान्ङीः, गौर शबल सारंग पिशंग हरिण पाण्डुर अमर सुंदर विकल निष्कल ( गुणवचनाः ) दास चेट विट भिक्षुक बंधक पुत्र गायत्र आनंद नट ( अजातिवचनाः ) काव्य शैव्य मत्स्य मनुष्य मुकय हय गवय ऋश्य द्रुण ओकण सौधर्म आरद दोटी वरट नाट मूलाट पाट सुपाट पेट पट पटल पुट कुट धातक केतक तर्कर बदर कुवल लवण बिल्व आमलक भालत वेतस अतस आढक कदर कदल गडुच कुंभ यूष मेष मूष करीर सल्लक मालक मेथ पिप्पल हरीतक कोशातक शम तम शृंग भृंग बर्बर पाण्ड पिंड युप सूप सूर्प मठ पिठर खार काकण द्रोण आसंद कंदल देह देहल शष्कुल सूच मंजर वैजयंत शाल्क सरस् अनडुही अनड्वाही प्रत्यवरोहिणी पृथिवी आग्रहायणी, नात्र पुंवद्भावलुकौ, एहि पर्येहि नद मह गर देव तर सूद चण्ड वरट इत्याद्याः, बहुनदा भूमिः। २-४-८७ मत्स्यस्य यः ङ्यां लुक्। २-४-२१ वयस्यनन्त्ये ङीरात्, कुमारी परमकिशोरी कलभी तरुणी वधूटी। २-४-२३ परिमाणात्ताद्धितलुक्यविस्ता ( षष्टिः पलानि) ऽऽचित (तौलकं) कम्बल्यात् (उर्णापलशतं) द्विगोरतः, आयामं तु प्रमाणं स्यात्परिमाणं तु सर्वतः। द्वाभ्यां कुडवाभ्यां क्रीता द्विकुडवी। २-४-२४ कांडात्प्रमाणादक्षेत्रे द्विगोः, द्विकांडी, अप्रमाणादपीति। २-४-२५ पुरुषाद्वा प्रमाणाद् द्विगोस्तद्धितलुकि, द्विपुरुषी। २-४-२६ रेवतरोहिणाद्भे, रेवती रोहिणी, रेवत्यां जाता रेवती। २-४-२७ नीलात् प्राण्यौषध्योः, नीली। २-४

२८ स्त्राच्च नाम्नि वा ङीः, नीला नीली अवृद्धविलूनी अवृद्धविलुना । २-४-२९ केवलमामकभागधेयपापापरससमानार्यकृतसुमंगलभेषजात् नाम्नि, मामिका बुद्धिर्नात्रेऽणो ङीः। २-४-२२ द्विगोः समाहारात् अतः, पञ्चाजी। २-४-२० अणञेयेकणूनञ्स्नञ्टितां, औपगवी औत्सी वैनतेयी शिलेयी आक्षिकी स्त्रैणी पौंस्नी पंचतयी शुनिंधयी, षष्ठ्याः पाणिनीया गौतमा। २-४-३० भाजगोणनागस्थलकुण्डकालकुशकामुककटकबरात् पक्वावपनस्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे ङीः, जानपदी वृत्तिरिति, जातौ नागी। २-४-३१ नवा शोणादेः, शोण चण्ड कमल कृपण विकट विशाल विशंकट ध्वज कल्याण उदार पुराण बहु वृत्रहन् चंद्र भाग । २-४-३२ इतोऽक्त्यर्थात्, भूमी भूमिः, क्तेः अंचतिअंहतिअंकतिशकटिशस्त्रिशारितारिआहिकपिमुनिरात्रियष्टिभ्यः कटिश्रोणिप्रभृतिप्राण्यङ्गवाचिभ्य इति क्तिवर्जितकृदन्तेभ्यश्चेकारान्तेभ्य एव चेति। २-४-३३ पद्धतेः। २-४-३४ शक्तेः शस्त्रे। २-४-३५ स्वरादुतो गुणादखरोः, येन नाव्यवधानं तेन व्यवहितेऽपीति वर्णेऽन्तरे, पट्वी पटुः। सत्त्वे (द्रव्ये) निविशतेऽपैति, पृथग्जातिषु दृश्यते। आधेय (उत्पाद्य) श्चाक्रियाजश्च (नित्यः), सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥ २-४-३६ श्येतैतहरितभरतरोहिताद्वर्णात्तो नश्च, श्येनी श्येता। २-४-३७ क्नः पलितासितात् वर्णात्तो ङीर्वा, पलिक्नी पलिता। २-४-३८ असहनञ्विद्यमानपूर्वपदात्स्वांगादक्रोडादिभ्यः वा ङीः, अतिकेशी अतिकेशा। क्रोड खुर गुद शफ बाल भाल गल भग उख कर। अविकारो (बहुशोफा) द्रवं कफः) मूर्त्त (ज्ञानं), प्राणिस्थं (शाला) स्वाङ्गमुच्यते। च्युतं च प्राणिन (बहुकेशी रथ्या) स्तत्तान्निभं च प्रतिमादिषु (किशलयकरा) ॥१॥ २-४-३९ नासिकोदरौष्ठजंघादंतकर्णशृंगांगगात्रकंठात् वा ङीरसहादेः, नियमोऽयमन्यबहुस्वर-

संयोगोपान्त्यनिषेधाय, समदन्ती समदन्ता, दीर्घजिह्वी, समाहारात् कल्याणपाणिपादा, नाङ्गगात्रकण्ठादपीति । २-४-४० नखमुखादनाम्नि वा ङीः, सुमुखी सुमुखा । २-४-४१ पुच्छात् असहादेर्वा ङीः, सुपुच्छी सुपुच्छा । २-४-४२ कबरमणिविषशरादेः पुच्छात्, कबरपुच्छी । २-४-४३ पक्षाच्चोपमानादेः, उलूकपक्षी उलूकपुच्छी । २-४-४४ क्रीतात्करणादेः, वस्त्रक्रीती, धनक्रीतेति । २-४-४५ क्तादल्पे करणादेः, अभ्रविलिप्ती । २-४-४६ स्वाङ्गादेरकृतमितजातप्रतिपन्नाद्बहुव्रीहेः, उरुभिन्नी । २-४-४७ अनाच्छादजात्यादेर्नवा अकृतादिक्तान्तात् ङीः, शाङ्गरजग्धी शाङ्गरजग्धा । २-४-४८ पत्युर्नः बहुव्रीहेर्वा, दृढपत्नी दृढपतिः, पत्यन्तश्चेद्बहुव्रीहिः । २-४-४९ सादेः पत्युर्नः ङीश्च वा, अधिपत्नी अधिपतिः । २-४-५० सपत्न्यादौ, निपातात् समानस्य सः पुंवद्भावाभावश्च, एकवीरपिंडभ्रातृपुत्रेभ्यः । २-४-५१ ऊढायां पत्युर्नः ङीश्च, पत्नी । २-४-५२ पाणिगृहीतीति ऊढायाम्, इतिः प्रकारे तेन पाण्यात्ती कराती । २-४-५३ पतिवत्न्यंतर्वत्न्यौ भार्यागर्भिण्योः । २-४-५४ जातेरयान्तनित्यस्त्रीशूद्रात् ङीः, संस्थानव्यङ्ग्या सकृदुपदेशव्यङ्ग्यत्वे सत्यत्रिलिंगा गोत्रचरणलक्षणा च जातिस्त्रिविधा, कुक्कुटी ब्राह्मणी कठी । अयान्तेत्यादि वतण्डी इभ्या खट्वा शूद्रा । २-४-५५ पाककर्णपर्णवालान्तात् जातेर्ङीः, औषध्य एता नित्यस्त्रीलिंगाः । २-४-५९ धवाद्योगादपालकान्तात् आत्, शूद्री, प्रष्ठी अभेदोपचारे, व्यतिरेके प्राष्ठी । २-४-६० पूतक्रतुवृषाकप्यग्निकुसितकुसीदादै च धवाद्, पूतक्रतायी । २-४-६१ मनोरौ च वा चादैः, मनुः मनावी मनायी । २-४-६२ वरुणेन्द्ररुद्रभवशर्वमृडादान् चान्तः, मृडानी, प्रजापतिवणिजेभ्य एभ्यो णिजंतेभ्योऽपि आहिताग्नि चेति । २-४-६३ मातुलाचार्योपाध्यायाद्वा धवान् ङीः आन् चान्तः, मातुलानी मातुली । २-३-९६ क्षुभ्नादीनाम् न णः, तन्नु आचार्यानी

आचार्यभोगीन सर्वनामन् नूनमन नृत्त नर्त्तन नट नद नङ्गी नगर निवेश निवास आग्नि अनूप नंदिन् नन्दन गहन नदन ख्याग्। आवपीति। २-४-६४ सूर्याद् देवतायां वा आन् चान्तः, सूर्याणी सूर्या। २-४-६५ यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे ङीरान् चान्तः, हिमानी। २-४-६६ आर्यक्षत्रियाद्वा ङीरान् चान्तः, क्षत्रियाणी क्षत्रिया, धवयोगे एवापीति। २-४-६७ यञो डायन् च वा, गार्गी गार्ग्यायणी। २-४-८८ व्यञ्जनात्तद्धितस्य यो ङ्यां लुक्। २-४-६८ लोहितादिशकलान्तात्, शाकल्यायनी, लोहित शंशित कति। २-४-६९ षावटाद्वा, गोकक्ष्यायणी गोकक्ष्या। २-४-७० कौरव्यमाण्डुकासुरेः, आसुरायणी। २-४-७१ इञ इतः ङीः, सौतंगमी। २-४-७२ नुर्जातेः इतो ङीः, दाक्षी। २-४-७३ उतोऽप्राणिनश्चायुरज्ज्वादिभ्यः ऊङ् नुर्जातेः, कुरूः इक्ष्वाकूः, अलाबूः ताच्छीलिकानांसंज्ञात्वेनाजातित्वाद्वे भीर्विति। २-४-७४ बाह्वन्तकद्रुकमंडलोनाम्नि ऊङ्, भद्रबाहूः। २-४-७५ उपमानसहितसंहितसहशफवामलक्ष्मणाद्युरोः ऊङ्, वामोरूः।२-४-७६ नारी सखी पङ्गू श्वश्रू, धवयोगेऽपि च। २-४-७७ यूनस्तिः, युवतिः, किदतेर्युवती, निर्यूनी। २-४-७८ अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः, कारीषगन्ध्या दैवदत्त्या दौवार्या औडुलोम्या। २-४-७९ कुलाख्यानां अनार्षे वृद्धेऽणिञन्तानामन्त्यस्य ष्यः, पौणिक्या, भूणिक मुखर गुप्ति। २-४-८० क्रौड्यादीनाम् अणिञन्तानामन्त्यस्य ष्यः, क्रौड्या लाड्या, व्याडि आपक्षिति आपिशलि चौपयत इत्याद्याः। क्रौड्येय इति। २-४-८१ भोजसुतयोः क्षत्रियायुवत्योः ष्यः, भोज्या। २-४-८२ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा ष्यः। २-४-८९ सूर्यागस्त्ययोरीये च यो लुक्, चात् ङ्यां, सूर्यस्य मानुषी स्त्री सूरी, सौरी प्रभा। इति स्त्रीप्रत्ययाः

—*—

२-२-३१ नाम्नः प्रथमैकद्विबहौ स्यौजस्लक्षणा, स्वार्थ (भावो विशेषणं गुणो वा) द्रव्य (विशेष्यं) लिङ्गसंख्याशक्ति (स्वपराश्रयाश्रितक्रियोत्पत्तिहेतुः कारकरूपा तत्पूर्वकसंबंधरूपा च) लक्षणो व्यस्तः समस्तो वा नामार्थः ताद्‌र्थ्यवृत्तमानधरणयोगाधिपत्यसामीप्यसाधनैरुपचरितमपि नामार्थः। अश्वः, इयं जातिः, स्त्री, वृक्षः, क्रियते कटः, कुन्ताः प्रविशन्ति, गिरिर्दह्यते, प्रदीपो मल्लिका, यमोऽयं राजा, खारी मुद्गाः, तुला चंदनं, रक्तः कम्बलः, ग्रामाधिपतिर्ग्रामः, गंगायां घोषः, आयुर्घृतं। अलिंगं त्वं, अलिंगसंख्यं उच्चैः, शक्तिप्रधानं यत्र, स्वरूपमात्रं अध्यागच्छति, त्याद्यन्तपदसामानाधिकरण्ये प्रथमेति तत्त्वं। २-२-३२ आमन्त्र्ये प्रथमा, प्रसिद्धतत्संबंधस्य अभिमुखीकरणे, हे देव। २-२-१ क्रियाहेतुः कारकं द्रव्याणां स्वपराश्रयसमवेतक्रियानिर्वर्त्तकं कर्त्रादि, कर्त्ता कर्म च करणं, संप्रदानं तथैव च। अपादानाधिकरणे, इत्याहुः कारकाणि षट् ॥१॥ २-२-२ स्वतंत्रः कर्त्ता, प्रधान आत्मप्रधानो वा, करोति कारयति वा घटं मैत्रः, उक्तार्थानामप्रयोगस्तेन नाम्न इति प्रथमा, एवं कर्मणि। २-२-३ कर्तुर्व्याप्यं कर्म, निर्वर्त्य (घटं करोति) विकार्यं (दधि मथ्नाति) प्राप्य (रूपं पश्यति) भेदात्, तदपि इष्टानिष्टानुभयभेदं, दुहिभिक्षिरुधिप्रच्छिचिग्ब्रूग्शास्वर्थेषु याचि (अनुनये) जयतिप्रभृतिषु च प्रधानाप्रधाने कर्मणी, क्रियार्थः प्रधानं, अन्यदप्रधानं, दुहादेर्गौणे प्रत्ययः गौर्दुह्यते पयः, नीवहिहादीनां तु प्रधाने ग्राममजा नेतव्याः। २-२-४ वाऽकर्मणामणिक्कर्त्ता णौ कर्म, लेखयति मैत्रं मैत्रेण वा, अर्थान्तरसंग्रहप्रसिद्ध्यविवक्षातोऽप्यकर्मकः। २-२-५ गतिबोधाहारार्थशब्दकर्म (क्रिया व्याप्यं च) नित्याकर्मणामनीखाद्यदिह्वाशब्दायक्रन्दाम्, गमयति मैत्रं ग्रामं, बोधयति गुरुः शिष्यं धर्मं, भोजयति बटुमोदनं, उपलंभयति शिष्यं विद्यां, आसयति मैत्रं चैत्रः। बोधविशेषे नेति। कालाध्वभावदेशैः सर्वे सकर्माणः, प्रेषणादिना व्याप्यत्वे नियमः।

२-२-६ भक्षेर्हिंसायां, भक्षयति सस्यं बलीवर्दान् मैत्रः । २-२-७ वहेः प्रवेयः, वाहयति भारं बलीवर्दान् । २-२-८ ह्रक्रोर्नवा, विहारयति देशं कारयति कटं वा चैत्रं चैत्रेण वा । २-२-९ दृश्य-भिवदोरात्मने ( पदे ) अणिकर्त्ता णौ वा कर्म, दर्शयते अभि-वादयते वा राजा भृत्यान् भृत्यैर्वा, णिज्णिग्नामधातुष्वपि । २-२-१० नाथः आत्मने व्याप्यं वा कर्म, सर्पिषो नाथते सर्पिर्वा । २-२-११ स्मृत्यर्थदयेशः, मातुः भ्रातरं वा ध्यायति, यत्नशेषश्चात्र कर्म । २-२-१२ कृगः प्रतीयत्ने, गुणाधानापायपरिहाराय समीहायां, एधोदकस्यैधोदकं वोपस्कुरुते । २-२-१३ रुजार्थस्याज्वरिसं-तापेर्भावे कर्त्तरि, रोगव्याध्यामयशिरोऽर्तिमुखाः भावाः, चौरस्य चौरं वा व्यथयति रोगः । २-२-१४ जासनाटक्राथ-पिषो हिंसायां, चौरस्य चौरं वा पिनष्टि, आकारोपान्त्य एव त्रयाणां । २-२-१५ निप्रेभ्यो घ्नः हिंसायां व्याप्यं वा कर्म, चौरस्य चौरं वा निप्रहन्ति । २-२-१६ विनिमेयद्यूतपणं पणव्यवह्रोः कर्म वा, शतस्य शतं वा पणायति, वचनभेदान्न यथासंख्यं । २-२-१७ उपसर्गाद्दिवः, शतस्य शतं वा प्रदीव्यति । २-२-१८ न अनुपसर्गस्य दिवः, शतस्य दीव्यति, निषिद्धे कर्मणि षष्ठी । २-२-१९ करणं च दिवः कर्म, करणमपि, अक्षानक्षैर्वा दीव्यति, नात्र स्पर्धः, प्रतिकार्यं वा संज्ञाभेदः । २-२-२० अधेः शीङ्स्थास आधारः कर्म, ग्राममधिशेते, उपसर्गान्यार्थान्तर्भूतक्रियाणिगन्तर्भूतणिगिभरकर्मका अपि सकर्मकाः। २-२-२१ उपान्वध्याङ्वसः, ग्राममुपवसति, स्थानार्थः अदाधनदार्थोरनदादिरीति भक्तादिकश्च । २-२-२२ वाऽभि-निविशः, ग्राममभिनिविशते, व्यवस्थितविभाषेयं कल्याणे-ऽभिनिविशते । २-२-२३ कालाध्वभावदेशं वाऽकर्म चा-कर्मणां चात्कर्म, मासं मासे वाऽऽस्ते, मासमास्यते भावे, कर्म-त्वे मास आस्यते, अत्यंतसंयोगे कर्मत्वमेवेति, क्रोशं पठति श्रुतं । २-२-४० कर्मणि द्वितीया, कटं करोति, यत्क्रियाव्याप्यं तत्त-

त्कर्म न केवला प्रकृतिः प्रयोक्तव्येति वा कर्मत्वं, करोति कटं भीष्मं, विशेष्यसमं वा विशेषणं।२-२-४१ क्रियाविशेषणात्, सयुक्तिकं भाषते। २ २-४२ कालाध्वनोर्व्याप्तौ, मासमधीते क्रोशमधीते, भावादपि गोदोहं वक्तः। २-२-३३ गौणात्समयानिकषा-हाधिगन्तराऽन्तरेणातियेनतेनैः द्वितीया, अति वृद्धं कुरून् (कुर्वतिक्रमेण) अन्तरा निषधं नीलं च विदेहाः, बहुत्वाद् बुभुक्षितं न प्रति भाति किञ्चिदित्यादि हा तातेत्यादावामन्त्र्यं च। २-२-३४ द्वित्वेऽधोऽध्युपरिभिः, उपर्युपरि ग्रामं ग्रामाः। २-२-३५ सर्वोभयाभिपरिणा तसा, परितो ग्रामं क्षेत्राणि। २-२-३६ लक्षणवीप्स्येत्थंभूतेष्वभिना, वृक्षमभि विद्योतते विद्युत्। २-२-३७ भागिनि च प्रतिपर्यनुभिः, चाल्लक्षणादिषु, यदत्र मां प्रति स्यात्तद्दीयतां, वृक्षं प्रति। २-२-३८ हेतुसहार्थेऽनुना, देवेंद्रोपपाताध्ययंनमन्वागच्छत् देवेन्द्रः, नदीमन्वसिता सेना, तुल्ययोगो विद्यमानता च सहार्थः, तृतीयार्थे इति। २-२-३९ उत्कृष्टेऽनूपेन, अनुयशोविजयं तार्किकाः, उपहेमचंद्रं वैयाकरणाः। २-२-२४ साधकतमं करणं, क्रियासिद्धौ प्रकृष्टोपकारकं, दानेन भोगानाप्नोति, संवरेण निर्जरयाऽऽप्नोति मोक्षं, अपादानाधारौ व्यवहितोपचरितावपि नेदमिति तमप्। २-२-४४ हेतुकर्तृकरणेत्थंभूतलक्षणे तृतीया, धनेन कुलं, चैत्रेण कृतं, मनसा ध्यायति, ईर्यया साधुमद्राक्षीत्। २-२-४३ सिद्धौ तृतीया कालाध्वनोरत्यंतसंयोगे, मासेनाधीत आचारः।२-२-४५ सहार्थे, समं शिष्येण गुरुः, गम्यमानेऽपि। २-२-४६ यद्भेदैस्तद्वदाख्या ततः, निसर्गेण प्राज्ञः, स्वभावेनोदारः। अक्ष्णा काणः लोकरूढेरक्ष्णेत्युक्तार्थत्वेऽपि। २-२-४७ कृताद्यैः निषेधार्थैर्युक्तात्, कृतं तेन, सृतं भवतु अलं किम्। २-२-४८ काले भान्नवाऽऽधारे, पुष्येण पुष्ये वा पायसमश्नीयात्।२-२-४९ प्रसितोत्सुकावबद्धैः बद्धार्थैः, गृहेण गृहे वोत्सुकः। २-२-५० व्याप्ये द्विद्रोणादिभ्यो वीप्सायां वा, सहस्रं सहस्रं सहस्रे-

ण वाऽश्वान् क्रीणाति।२-२-५१समो ज्ञोऽस्मृतौ वा व्याप्ये, मात्रा मातरं वा संजानीते। २-२-५२ दामः संप्रदानेऽधर्म्ये आत्मने च समः, दास्या संप्रयच्छते। २-२-२५ कर्माभिप्रेयः संप्रदानं, व्याप्येन क्रियया वा अभिमतसंबंधाश्रयः, शिष्याय धर्ममुपदिशति, देवेभ्यो नमति। २-२-५३ चतुर्थी संप्रदाने। २-२-२६ स्पृहेर्व्याप्यं वा, गुणेभ्यः गुणान्वा स्पृहयति। २-२-२७ क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः, रुष्यति मैत्राय। २-२-२८ नोपसर्गात् क्रुद्द्रुहा, मैत्रमभिक्रुध्यति। २-२-५४ तादर्थ्ये, कुंडलाय हिरण्यं। २-२-५५ रुचिकृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु योगे, जिनदत्ताय रोचते धर्मः, असंबन्धे रोचतेऽस्माकं तक्रं, श्लेष्मणे जायते दधि, चैत्राय शतं धारयति। २-२-५६ प्रत्याङ्श्रुवाऽर्थिनि, याचकाय निष्कान् प्रतिशृणोति। २-२-५७ प्रत्यनोर्गृणाऽऽख्यातरि, आचार्यायानुगृणाति। २-२ ५८ यद्वीक्ष्ये राधीक्षी, स्त्रीभ्य ईक्षते (विमत्या) दैवे ईक्ष्ये राधीक्ष्यर्थयोगे इति च। २-२-५९ उत्पातेन ज्ञाप्ये, वाताय कपिला विद्युत्। २-२-६० श्लाघह्नुस्थाशपा युक्तात् प्रयोज्ये व्याप्ये ज्ञाप्ये सति, मैत्राय श्लाघते। २-२-६१ तुमोऽर्थे भाववचनात्, पाकाय व्रजति, पक्तुं इत्यर्थः। २-२-६२ गम्यस्याप्ये तुमः, फलेभ्यो व्रजति, फलान्याहर्तुमित्यर्थः। २-२-६३ गतेर्नवाऽनाप्ते व्याप्ये, ग्रामाय ग्रामं वा गन्ता। २-२-६४ मन्यस्यानावादिभ्योऽतिकुत्सने व्याप्ये वा, न त्वां तृणाय तृणं वा मन्ये, नावन्नशुकशृगालकाकाः। कुत्सामात्रे इति॥ २-२-६५ हितसुखाभ्यां, चैत्राय चैत्रस्य वा सुखं। २-२-६६ तद्भद्रायुष्यक्षेमार्थार्थेनाशिषि, तदिति हितसुखे, कार्यं कुशलं वा भूयात् संघाय संघस्य वा। २-२-६७ परिक्रयणे (वेतनादौ) शताय शतेन वा परिक्रीतः। २-२-६८ शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः युक्तात्, नमो, इंद्रायः, विवक्षातः कारकाणीति नत्वा गुरुभ्यः, कारकविभक्तेर्बलीयस्त्वान्नामधातूनाम-

विवक्षितप्रकृतिप्रत्ययभेदानां धातुत्वाद्वा देवान् नमस्यति । २-२-२९अपायेऽवधिरपादानं, निर्दिष्टविषयोपात्तविषयापेक्षितक्रियभेदं, ग्रामादागच्छति, कुसूलात्पचति पचिरादानाङ्गेऽत्र, अभिरूपतराः सांकाश्यकेभ्यः पाटलिपुत्रकाः गम्या क्रियाऽत्र, कायबुद्धिसंसर्गपूर्वकावपायौ, अधर्माद्विरमति चौरेभ्यस्त्रायते, शृंगाच्छरः हिमवतो गंगा । २-२-६९ पंचम्यपादाने,चौराद् बिभेति । २-२-७० आङाऽवधौ, आ पाटलीपुत्राद् वृष्टो देवः, अभिविधिरपि मर्यादा । २-२-७१ पर्यपाभ्यां वर्ज्ये, परि अप वा पाटलीपुत्राद् वृष्टो देवः । २-२-७२ यतः प्रतिनिधिप्रतिदाने प्रतिना, अभयः श्रेणिकतः प्रति, तिलेभ्यः प्रति माषान् प्रयच्छति । २-२-७३ आख्यातर्युपयोगे, नियमपूर्वकविद्याग्रहणे, उपाध्यायादधीते । २-२-७४ गम्ययपः कर्माधारे, प्रासादादासनाद्वा प्रेक्षते, प्रयोग इव । २-२-७५ प्रभृत्यन्यार्थदिक्शब्दबहिराराादितरैः, आरभ्य ग्रीष्मात्, भिन्नश्चैत्रात्, ग्रामाद्वनं, आराद् ग्रीष्माद्वसंतः, ( गम्ये ) क्रोशाल्लक्ष्यं विध्यति ( परेण ), इतरोऽन्यतरः । २-२-७६ ऋणाद्धेतोः, शताद् बद्धः ।२-२-७७ गुणादस्त्रियां नवा हेतोः, जाड्यात् जाड्येन वा बद्धः, अग्निर्धूमादित्यादौ गम्ययप् । २-२-७८ आराद्थैः वा, दूरं अन्तिकं वा ग्रामात् ग्रामस्य वा । २-२-७९ स्तोकाल्पकृच्छ्रकतिपयादसत्त्वे करणे वा पञ्चमी, स्तोकात् स्तोकेन वा मुक्तः ( अविशेष्ये ) । २-२-८० अज्ञाने ज्ञः षष्ठी करणे, सर्पिषो जानीते, प्रवृत्त्यर्थो ज्ञः । २-२-८१ शेषे स्वस्वामिभावादिसंबंधे, राज्ञः पुरुषः, कर्माद्यविवक्षायां सुभाषितस्य शिक्षते । २-२-८२ रिरिष्टात्स्तादस्तादसतसाता, उपरि उपरिष्टात् पुरस्तात् परस्तात् पुरः उत्तरतः पश्चिमाद्वा ग्रामस्य । २-२-८३ कर्मणि कृतः, तीर्थस्य कर्त्ता । २-२-८४ द्विषो वाऽतृशः, चौरस्य चौरं वा द्विषन् । २-२-८५वैकत्र द्वयोः कर्मणोः, अजाया अजां वा स्रुघ्नस्य स्रुघ्नं वा नेता । २-२-८६ कर्त्तरि कृतः, भवतः स्वापः। २-२-८७

द्विहेतोरस्त्र्यणकस्य वा कर्मकर्तृषष्ठीहेतोः, साध्वीं खल्वनेकान्तजयपताकायाः कृतिराचार्यहरिभद्रस्याचार्यहरिभद्रेण वा, घञ्लोः कर्मण्येवेति । २-२-८८ कृत्यस्य वा, भवतः भवता वा

कार्यो घटः । २-२-८९ नोभयोर्हेतोः कर्तृकर्मषष्ठीहेतोः कृत्यस्य कर्त्तरि, नेतव्या ग्राममजा चैत्रेण । २-२-९० तृन्नुदन्ताव्ययक्वस्वानातृञ्शतृङिणकचूखलर्थस्य नोभयोः पष्ठी, वदिताऽपवादान् मैत्रः श्रद्धालुस्तत्त्वं कटं कृत्वा तत्त्वं विद्वान् मलयं पवमानः अधीयँस्तत्त्वार्थं परीपहान् सासहिः कटं कारकः सुज्ञानं तत्त्वं भवता । २-२-९१ क्तयोरसदाधारे नोभयोः, कटं कृतवान् चैत्रः । २-२-९२ वा क्लीबे क्ते कर्त्तरि षष्ठी न, मयूरस्य मयूरेण वा नृत्तं । २-२-९३ अकमेरुकस्य कर्माणि, भोगानभिलापुकः । २-२-९४ एष्यदृणेनः, ग्रामं गामी शतं दायी । २-२-३० क्रियाश्रयस्याधारोऽधिकरणं, दिवि देवाः अनन्यत्र भावे वैपयिकं, कटे आस्ते एकदेशसंयोगे औपश्लेपिकं, तिलेपु तैलं सर्वस्तावयवसंयोगेऽभिव्यापकं, गंगायां घोपः सामीप्यकं, युद्धे सन्नह्यते नैमित्तिकं, अंगुल्यग्रे करिशतमौपचारिकं । २-२-९५ सप्तम्यधिकरणे । २-२-९६ नवा सुजर्थैः काले, बहुधाऽह्नि अह्नो वा भुंक्ते । २-२-९७ कुशलायुक्तेनासेवायां, आयुक्तोऽध्ययनेऽध्ययनस्य वा । २-२-९८ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः वा, गोपु गवां वा प्रसूतः २-२-९९ व्याप्ये क्तेनः, आम्नाती द्वादशांगे । २-२-१०० तद्युक्ते हेतौ व्याप्ययुक्ते, चर्मणि द्वीपिनं हंति । २-२-१०१ अप्रत्यादावसाधुना, असाधुर्मैत्रो मातरि । २-२-१०२ साधुना अप्रत्यादौ, साधुर्मातरि, तत्त्वाख्याने । २-२-१०३ निपुणेन चार्चायां अप्रत्यादौ, पितरि साधुः निपुणो वा । २-२-१०४ स्वेशेऽधिना, अधिमगधेपु श्रेणिकः अधिश्रेणिके मगधाः । २-२-१०५ उपेनाधिकिनि, उपखार्यां द्रोणः, दोणोऽधिकः । २-२-१०६ यद्भावो भावलक्षणं, गोपु दुग्धास्वागतः, गम्येनापि । २-२-१०७ गते गम्ये-

ऽध्वनोऽन्तेनैकार्थ्यं वा यदीयक्रियया भावाववोधस्तस्य, लोकमध्याल्लोकांतमुपर्यधश्च सप्त रज्जूनामनन्ति। २-२-१०८ षष्ठी वाऽनादरे यद्भावो भावलक्षणं तस्मिन् भाववति, रुदतो लोकस्य रुदति लोके वा प्राव्राजीत्। २-२-१०९ सप्तमी चाविभागे निर्धारणे, पुरुषेषु पुरुषाणां वा क्षत्रियः शूरतमः। गोभ्यः कृष्णा संपन्नक्षीरतमेति। २-२-११०

क्रियामध्येऽध्वकाले पंचमी च, अद्य भुक्त्वा द्व्यहाद् द्व्यहे वा भोक्ता। २-२-१११ अधिकेन भूयसस्ते (अल्पीयसा) अधिको द्रोणः खार्यां खार्या वा। २-२-११२ तृतीयाऽल्पीयसः (भूयोऽर्थाधिकेन) अधिका खारी द्रोणेन। २-२-११३ पृथग् नाना पञ्चमी च, पृथग् मैत्रेण मैत्राद्वा। २-२-११४ ऋते द्वितीया च, ऋते धर्मात् धर्मं वा कुतः सुखं?। २-२-११५ विना ते तृतीया च, वातं वातेन वाताद्वा विना वर्षं। २-२-११६ तुल्यार्थैस्तृतीयाषष्ठ्यौ, गुरुणा गुरोर्वा समः। २-२-११७ द्वितीयाषष्ठ्यावेनेनानञ्चेः, पूर्वेण ग्रामं ग्रामस्य वा। २-२-११८ हेत्वर्थैस्तृतीयाद्याः, धनेन हेतुना यावत् धने हेतौ वसति। २-२-११९ सर्वादेः सर्वाः हेत्वर्थैः, को हेतुः यावत् कस्मिन् हेतौ वसति। २-२-१२० असत्त्वारादर्थाट्टाङसिङ्यम्, दूरेण दूरात् दूरे दूरं वा अभ्याशेनाभ्याशादभ्याशेऽभ्याशं वा ग्रामाद् ग्रामस्य वा। २-२-१२३ फाल्गुनीप्रोष्ठपदस्य भे द्वौ बहुवद्वा, पूर्वे फाल्गुन्यौ पूर्वाः फाल्गुन्यः। २-२-१२४ गुरावेकश्च वा बहुवत्, चाद् द्वौ, अयं तपस्वी इमे तपस्विनः एते गुरवः। विचित्राः शब्दशक्तय इति रूढितस्तत्तल्लिंगसंख्योपादानव्यवस्था आपो दारा गृहा इत्यादौ। इति कारकाणि ॥

३-१-१८ नाम नाम्नैकार्थ्ये समासो बहुलं समस्यते, ऐकार्थ्यानुभवे राजपुरुषः, तदभावे उपकुम्भं, बहुलवचनात् क्वचिदनाम भात्यर्कं नभः, अनाम्ना अनुव्यचलत्, अधिकारात् क्रियाविशेषणं क्रियावता यथा विस्पष्टपटुः, तद्धितार्थे गतपूर्वी, दम्पतीङ्वेत्यलुप्। ३-२-८ ऐकार्थ्ये ऐकपद्ये स्यादेर्लुप्। ३-१-२६

तत्रादाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः अन्यपदार्थे, केशेषु२गृहीत्वा मिथः कृतं युद्धं केशाकेशि। ७-३-७४ इच्च युद्धे। ३-२-७२ इच्च्यस्वरे दीर्घ आच्च। ७-४-६८अवर्णे-वर्णस्य ताद्धितेऽपदस्य लुक्,वाक्यवर्जनात्समासे नामत्वं,स्यादि-स्ततः। ३-२-६ अनतो लुप् अव्ययीभावात्स्यादेः, दण्डैर्दण्डैश्च मिथः प्रहृत्य कृतं युद्धं दण्डादण्डि बाहाबाहवि। ७-४-७० अस्व-यंभुवोऽव् उवर्णस्य यस्वरे, बाहूबाहवि, दीर्घत्वयोगात् दो-र्दोपि, अस्यसि। ७-३-७९ द्विदण्डयादिः। ३-१-३९ विभक्ति-समीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिपश्चात्क्रमख्या-तियुगपत्सदृक्संपत्साकल्यान्तेऽव्ययं ऐकार्थ्ये पूर्वार्थेऽ-व्ययीभावः, विभक्तिः कारकं, स्त्रीषु अधिस्त्रि, द्वन्द्वैकत्वा-व्ययीभावाविति क्लीवता। ३-१-१४८ प्रथमोक्तं प्राक् समासे, अधियुष्मद्, कुम्भस्य समीपं। ३-२-२ अमव्ययीभावस्यातो-ऽपञ्चम्याः स्यादेः, उपकुम्भं, उपकुम्भात्। ३-२-३ वा तृती-याया अम्। ३-२-४ सप्तम्या वाऽम्, उपकुम्भेन उपकुम्भे, पक्षे अम्। ३-१-२७ नदीभिर्नाम्नि अन्यपदार्थे, स्वं रूपं शब्दस्या-शब्दसंज्ञायामिति सत्यपि सामान्यविशेषग्रहाय बहुता,उन्मत्ता गंगा यस्मिन् उन्मत्तगङ्गम्। ३-१-२८ सङ्ख्या समाहारे नदीभिः, द्वियमुनम्, पूर्वपदप्राधान्येऽयं। समाहारद्विगुरिति। ३-२-५ ऋद्ध-नदीवंश्यस्यातः सप्तम्या अम्। ७-३-९१ संख्याया नदी-गोदावरीभ्याम् अत्, द्विनदं। ३-१-२९ वंश्येन पूर्वार्थे संख्या, सप्त काशयो वंश्याः सप्तकाशि राज्यस्य, पूर्वपदार्थो नेहेति। मद्राणां समृद्धिः सुमद्रं, व्यृद्धौ दुर्यवनं, अभावे निर्मक्षिकं, अत्यये अतिवर्षं, न संप्रति आम्राः अत्याम्रं, पश्चात् अनुरथं, ज्येष्ठस्य क्रमेण अनुज्येष्ठं, भद्रबाहुरिति ख्यातिः तद्भद्रबाहु, चक्रेण युगपत् सचक्रं, व्रतेन सदृक् सव्रतं। ३-२-१४६ अकाले-ऽव्ययीभावे उत्तरपदे सहस्य सः, सब्रह्म, तृणमप्यत्तीति सतृ-णमत्ति। ३-२-१४७ ग्रंथान्ते सहस्य सः, मुहूर्त्तपर्यन्तं समुहूर्त्त-

मधीते। ३-१-४१ यथाऽथा अव्युत्पन्नं, यथासूत्रं।३-१-३१ यावदियत्त्वे, यावन्त्यमत्राणि तावतः यावदमत्रं भोजय, अव्ययमेवेति। ३-१-३७ नित्यं प्रतिनाऽल्पे,अल्पः सूपः सूपप्रति, समासताद्धितानां वृत्तिर्विकल्पेन वृत्तिविषये च नित्यैवापवादवृत्तिरिति नित्यं। ३-१-३२ पर्यपाङ्बहिरच् पञ्चम्या, परित्रिगर्त्तम् आग्रामं, साहचर्याद् धैनलुप्यव्ययं तेन प्राङ् ग्रामात्।३-१-३३लक्षणेनाभिप्रत्याभिमुख्ये, प्रत्यग्नि शलभाः। ३-१-३४ दैर्घ्येऽनुः लक्षणेन नाम्ना, यमुनां यावद्दीर्घा अनुयमुनं मथुरा।३-१-३५ समीपेऽनुः, अनुनूपं पिशुनाः। ३-१-३० पारेमध्येऽग्रेऽन्तः षष्ठ्या वा, गङ्गायाः पारे पारेगङ्गम्। २-३-६६ निष्प्रागेऽन्तःखदिरकार्श्याम्रशरेक्षुप्लक्षपीयूक्षाभ्यो वनस्य नो णः, अग्रेवणं। ७-३-९० गिरिनदीपौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद्वा अत्, अन्तर्गिरं अन्तर्गिरि उपसमिधं उपसमिद्। ७-३-९२ शरदादेः अत्, उपशरदं, शरद् सदस् अदस् अनस् मनस् विपाश् दिश् दृश् विश् उपानह् अनडुह् चतुर् दिव्। ७-३-९३ जराया जरस् च, चादत्, उपजरसं।७ ३-८७ प्रतिपरोऽनोरव्ययीभावात् (९४ यावत्) अक्ष्णोऽत्, अन्वक्षं, अप्रादित्वादे प्रत्यक्षः। ७-३-८६ संकटाभ्याम्, समक्षं। ७-३-८८ अनः अत्, अध्यात्मं। ७-४-६१ नोऽपदस्य ताद्धिते लुक् अन्त्यस्वरादेः। ३-१-३८संख्याक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ, एकपरि शलाकापरि। ७-३-८९ नपुंसकाद्वाऽत् अनः, अनुलोमं अनुलोम।३-१-३६तिष्ठद्गिवत्यादयः, तिष्ठद्गु वहद्गु आयतीगवं खलेयवं खलेबुसं अन्यपदार्थे काले, समभूमि समपदाति, मान्तावपि। २-३ ५६ निर्दुःसुवेः समसूतेः षः, सुषमः दुष्षमः प्राह्णं प्रदक्षिणं एकान्तं, धातोरेवेति, समानतीर्थं यत्प्रभृतीत्याद्याः।७ ३-९४ सरजसोपशुनानुगवं। ३-१-४० योग्यतावीप्सार्थानतिवृत्तिसादृश्येऽव्ययं, रूपस्य योग्यं अनुरूपं, अर्थमर्थं प्रति प्रत्यर्थं, शक्तिमनतिक्रम्य यथाशक्ति,

सशीलं, मुख्यसादृश्यार्थं ॥ इत्यव्ययीभावः ।

३-१-४२ गतिक्वन्यस्तत्पुरुषः । ३-२-१५४ अनञः क्त्वो यप्, खाट्कृत्य। ३-२-१३५ पुरुषे वा का कोः, कुत्सितः पुरुषः कापुरुषः कुपुरुषः, ईषदर्थेऽपि । ३-१-४३ दुर्निन्दाकृच्छ्रे, निन्दितः पुरुषो दुष्पुरुषः। ३-१-४४ सुः पूजायाम्, सुस्तुतं, सुराजा। ७-३-७२ पूजास्वतेः प्राक्टात् न समासान्तः । ३-१-४५ अतिरतिक्रमे च, अत्युच्चैसौ, प्रधाने स्वरादौ लुप्स्यादेः, क्रियादियोगाभावात्रातिरव्ययं, अतिसेकः, बहुतरः समीचीनश्चेत्यर्थः। ३-१-४६ आङल्पे, आपिङ्गलः । ३-१-४८ अव्ययं प्रवृद्धादिभिः, स्वर्यातः अन्तर्भूतः इत्यादि। ३-१-४९ ङस्युक्तं कृता नाम, कुम्भकारः अग्निचित्। २-३-७१ ग्रामाग्रान्नियः णः, ग्रामणीः । २-३-७५ वोत्तरपदान्तनस्यादेरयुवपक्वाह्नः नो णः, माषवापिणी । ३-१-५० तृतीयोक्तं वा कृता नाम्ना, मलकेनोपदंशं मूलकोपदंशं। ७-३-७१ नञ्तत्पुरुषात् नाट्।३-२-१२५ नञत्,अगौः।३-१-१२९ अन् स्वरे नञ्, न अश्वः अनश्वः, आदेशान्न द्वित्वं। ३-२-१२६ त्यादौ क्षेपे, अपचति जाल्मः, नञ्श्रवणवारणाय। ३ २-१२७ नगोऽप्राणिनि वा । ३-२-१२८ नखादयः, नखः नभ्राण् नपात् नवेदाः नासत्या नमुचिः नकुलः नपुंसकं नक्षत्रं नक्रः नागः नग्नः नाकः नाराचः नापितः नमेरुः ननान्दा नान्तरीयकं नास्तिकः नभः नारङ्गः। ३-१-५१नञ्, असः अगौः, सदृशविरुद्धान्याभावेषु, असूर्यम्पश्या निवर्त्यमानतद्भावश्चोत्तरपदार्थः पर्युदासे, प्रसज्ये तु नञः पदान्तरेण सम्बन्धः। ३-१-५२ पूर्वापराधरोत्तरमभिन्नेनांशिना, पूर्वः कायस्य पूर्वकायः, पूर्वं पाणिपादस्य अंशिभेदात्।३-१-५३ सायाह्नादयः, मध्याह्नः।७-३-११८ सर्वांशसंख्याव्ययात् तत्पुरुषादह्नः अट् अहन्शब्दस्याह्नादेशश्च। २-३-७३ अतोऽह्नस्य रादिमतः पूर्वपदात् णः, पूर्वाह्णः। ३-१-५४ समेऽशेऽर्धं नवा, अर्धपणः पणार्धं। ७-२-१२५

वोत्तरपदेऽर्धे पश्चोऽपरस्य, दिक्पूर्वस्यापि, पश्चार्धे। ३-१-५६ जरत्यादिभिः अर्धं, अर्धजरतीयं जरत्यर्धं, परलिङ्गोऽशी। ३-१-६२ श्रितादिभिः द्वितीयान्तं, निर्वाणगतः, श्रितअतीतपतितगतअत्यस्तप्राप्तआपन्नगामिगम्यागामिनः। हिताशंसुः। ३-१-५८ स्वयंसामी क्तेन, स्वयंकृतं सामिभुक्तं। ३-१-५९ द्वितीया खट्वा क्षेपे क्तेन, खट्वारूढः। ३-१-६० कालः द्वितीयान्तः क्तेन, मासप्रमितः। ३-१-६१ व्याप्तौ कालः द्वितीयान्तः, मुहूर्तसुखं। ३-१-६३ प्राप्तापन्नौ तयाऽऽचानयोः, प्राप्तजीविकः, स्त्रीत्वार्थमत्, श्रितादित्वात् जीविकाप्राप्तः।३-१-६४ ईषद् गुणवचनैः, ईषत्पिङ्गलः। ३-१-६५ तृतीया तत्कृतैः, गिरिणा काणः गिरिकाणः, न शुद्धगुणेन, भवत्यपि। ३-१-६६ चतस्राऽर्धं तत्कृतेन, अर्धचतस्रः। ३-१-६७ ऊनार्थपूर्वाद्यैः तृतीयान्तम्। २-३-६८ गिरिनद्यादीनाम् वा णः, मापोणं मापोनं, पूर्वअपरसदृशसमकलहनिपुणामिश्रश्लक्ष्णाधिकाः,धान्यार्थः भ्रातृतुल्यः। ३-१-६८ कारकं कृता, आत्मकृतं पादहारकः।७-४-११७ कृत् सगतिकारकस्यापि विशेषणं, अरिदुर्जयः, प्राक् स्यादेः संबन्धः, निन्दास्तुत्योः प्रायः कृत्यैः, क्तवतुक्त्वातव्यानीयैर्न। ३-१-६९ नाविंशत्यादिनैकोऽऽचान्तः, एकान्नविंशतिः। ३-१-७० चतुर्थी प्रकृत्या, यूपाय दारुः यूपदारुः। ३-१-७१ हितादिभिः, गोहितं, सुखरक्षितवलयः, अश्वघासः, देवदेयं, न तव्येन। ३-१-७२ तदर्थार्थेन, पित्रे इदं पित्रर्थं, ङेऽर्थो वाच्यवत्। ३-१-७३ पञ्चमी भयाद्यैः, वृकाद्भयं वृकभयं, निर्गतजुगुप्सुअपेतअपोढमुक्तपतितअपत्रस्ताः,स्थानभ्रष्टः।३-१-७४ क्तेनासत्त्वे। ३-२-१० असत्त्वे ङसेः न लुप्, अल्पान्मुक्तः। ३-२-११ ब्राह्मणाच्छंसी ऋत्विजि। ३-१-७५ परःशतादिः, शतात् परे परःशताः। ३-१-१४९ राजदन्तादिषु, अप्राप्तमपि प्राक्। ३-१-७६ षष्ठ्ययत्नाच्छेषे, सापेक्षमसमर्थमित्यस्यानित्यत्वाद्देवदत्तस्य दासभार्या, उपमेति वाक्यात् प्रधानस्य तु

सापेक्षत्वेऽपि समास इति राजपुरुषोऽस्ति दर्शनीयः। २-३-६७ द्वित्रिस्वरौषधिवृक्षेभ्यो नवाऽनिरिकादिभ्यः वनस्य णः, माषाणां वनं माषवणं माषवनं, बहुत्वात् ' फली वनस्पतिर्ज्ञेयो, वृक्षाः पुष्पफलोपगा ' इति नात्र भेदो, न च यथासंख्यं, संज्ञाऽसंज्ञयोश्च। २-३-६९ पानस्य भावकरणे वा णः, क्षीरपाणं क्षीरपानं। २-३-७० देशे क्षीरपाणाः। २-३-७२ वाह्याद्वाहनस्य, शरवाहणं। २-३-९२ षात्पदे न णः, सर्पिष्पानं। यतिकम्बलः गोस्वामी, नाथादेर्व्याप्यादौ यत्नकृता आशिषि च। ३-१-७७ कृति षष्ठी, सर्पिर्ज्ञानं चौरोज्ज्ञासनं। ३-१ ७८ याजकादिभिः, गुरुपूजकः, तुल्यार्थैः गुरुसमः, याजकपरिचारकपरिवेषकस्नापकअध्यापकआच्छादकउन्मादकउद्वर्त्तकहोतृभर्त्तारः,तीर्थकर्त्ता ।३-१-७९ पत्तिरथौ गणकेन, पत्तिगणकः।३-२-११९अषष्ठीतृतीयादन्याद्दोऽर्थे वा। ३-२-१२० आशीराशास्थितास्थोत्सुकोतिरागे अपष्ठीतृतीयादन्याद्दः। ३-२-१२१ ईयकारके, अन्यस्य कारकः अन्यत्कारकः। २-४-८३ ष्यापुत्रपत्योः केवलयोरीच् तत्पुरुषे, कारीषगन्धीपुत्रः। ३-१-८० सर्वपश्चादादयः, सर्वचिरं। ३-१-८१ अकेन क्रीडाजीवे, शालभञ्जिका दन्तलेखकः। ३-१-८२ न कर्त्तरि षष्ठी अकेन, भवतः आसिका। ३-१-८३ कर्मजा तृचा च चात् कर्त्रकेन न, ओदनस्य भोजकः अपां स्रष्टा, त्रन्तक्रियाशब्देन न। ३-१-८४ तृतीयायां कर्त्तरि न कर्मजा, साध्वी संग्रहण्याः कृतिर्जिनभद्राचार्येण, पष्ठ्यामपि। ३-१-८५ तृप्तार्थपूरणाव्ययातृशत्राऽऽनशा षष्ठी न, तीर्थकराणां षोडशः। ३-१-८६ ज्ञानेच्छार्चार्थाधारक्तेन षष्ठी न, राज्ञां ज्ञातः इदमेषां शुक्तम्। ३-२-१४१ मांसस्यानड्घञि पाचि नवा लुक्, मांस्पाकः मांसपाकः। ३-१-८७ अस्वस्थगुणैः न षष्ठी, पटस्य शुक्लः, रूपरसगन्धस्पर्शैः ( न ये द्रव्ये ) बाहुल्यात् कंटकस्य तैक्ष्ण्यं कुसुमसौरभ्यं वाङ्माधुर्यं वचनप्रामाण्यं। ३-१५६ द्वित्रि-

चतुष्पूरणाग्रादयः अभिन्नेनांशिना वा, द्वितीयं भिक्षायाः द्वितीयभिक्षा, अग्रं हस्तस्य अग्रहस्तः, भिक्षाद्वितीयं । ३-१-५७ कालो द्विगौ च मेयैः, मासजातः, पूर्वं समाहारे त्र्यहजातः, द्वे अहनी सुप्तस्य द्व्यहसुप्तः, त्रिपदार्थे द्विगौ । ७-३-९९ द्विगोरन्नह्नोऽट् समाहारे, अद्विगावेकवचनेन प्रायः क्तान्तेन च । ३-१-८८ सप्तमी शौण्डाद्यैः, पानशौण्डः, धूर्त्तकितवव्यालसव्यआयसव्यानसवीणअन्तरअधीनपटुपण्डितकुशलचपलनिपुणसिद्धशुष्कपक्वबन्धअधमर्णउत्तमर्णाः ।३-१-८९ सिंहाद्यैः पूजायां, रणसिंहः । ३-१-९० काकाद्यैः क्षेपे, तीर्थश्वा । ३-१-९१ पात्रेसमितेत्यादयः, पात्रेसमितः गेहेनर्दी गोष्ठेव्यालः कूपकच्छपः नगरश्वा पिण्डीशूरः गर्भेदृप्तः, इतिना न समासान्तरं । ३-१-९२ क्तेन क्षेपे, भस्मनिहुतं । ३-२-२० तत्पुरुषे कृति अद्व्यञ्जनात् सप्तम्या अलुप्, बाहुल्यात् खेचरः गोपुचरः मद्रचरः खचरः हृदिस्पृक् । ३-१-९३ तत्राहोरात्रांशम् क्तेन, पूर्वाह्णकृतं, बाहुल्यात् रात्रिवृत्तं सन्ध्यागर्जितं । ३-१-९४ नाम्नि, अरण्येतिलकाः । ३-२-१८ अद्व्यञ्जनात्सप्तम्या बहुलं अलुप्, मुकुटेकार्षापणः, बाहुल्यात् त्वचिसारः त्वक्सारः जलकुक्कुरः ग्रामसूकरः ।३-२-१९ प्राक्कारस्य व्यञ्जने पदे अद्व्यञ्जनात्सप्तम्या बहुलं न लुप् नाम्नि, त्रिविधोऽपि नियमः । ३-१-९५ कृत्येनावश्यके, मासदेयं, बाहुल्यात् संवत्सरकर्त्तव्यम् । ३-१-४७ प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः, संगतोऽर्थः समर्थः प्रतिगतोऽक्षं प्रत्यक्षः ।७-३-८२ प्रत्यन्ववात्सामलोम्नः अत्, सानुलोमः, संगतमर्थेन समर्थं पदं, अलंकुमारि, वाक्यं चेति । २-४-९६ गोश्चान्ते ह्रस्वोऽनंशि समासेयोबहुव्रीहौ गौणस्याकिपः ङ्यादेश्च । ७-३-१२४ संख्याव्ययादङ्गुलेर्डः, अन्तरंगुलो नखः, बाहुल्यात् षष्ठीसप्तम्यौ अन्तर्गार्ग्यः प्रत्युरसं । ७-३-८४ प्रतेरुरसः सप्तम्याः अत् । ७-३ ११९ संख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत्, चात्सर्वांशसं-

ख्याऽव्ययात्, एकशब्दस्यासंख्यात्वं क्वचिदित्येकेति, पूर्वरात्रः ॥ ७-३-१०५गोस्तत्पुरुषात् अट्, राजगवं।७-३-१०६राजन्सखेः, देवराजः, नान्त इति देवराज्ञी।७-३-१०७राष्ट्राख्याद् ब्रह्मणः, काशिब्रह्मः ७-३-१०८ कुमहद्भ्यां वा । ७-३-१०९ ग्रामकौटात्तक्ष्णः, ग्रामतक्षः। ७-३-११० गोष्ठातेः शुनः, अतिश्वः । ७-३-११३ पूर्वोत्तरमृगाच्च सक्थ्नः उपमानाच्च, पूर्वसक्थं । ७-३-११४ उरसोऽग्रे, अश्वोरसं। ७-३-११५सरोऽनोऽश्मायसो जातिनाम्नोः, जातसरसं कालायसं। ७-३-११६अह्नः, परमाहः पुण्याहं। ७-३-११७ संख्यातादह्नश्च वा, संख्याताह्नः संख्याताहः। ७-३-१२० पुरुषायुषद्विस्तावत्रिस्तावम् । ७-३-१२१ श्वसो वसीयसः, श्वोवसीयसम्। ७-३-१२२ निसश्च श्रेयसः, निःश्रेयसं श्वःश्रेयसं। ७-३-१२३ नञव्ययात् संख्याया डः, अनवाः निस्त्रिंशः। ३-२-१३० कोः कत् तत्पुरुषे स्वरादौ, कदन्नं। ३-२-१३१रथवदे, कद्रथः, तत्पुरुष इति । ३-२-१३२ तृणे जातौ, कत्तृणं ।३-२-१३३कात्रिः, कोः किमो वा कत्रौ, कत्रयः। ३-२-१३४ काऽक्षपथोः, काक्षः। ७-३-७६ ऋक्पूःपथ्यपोऽत्, कापथं, पथे कुपथः। ३-२-१३६ अल्पे कोः का, कामधुरं। ३-२-१३७ काकवौ वोष्णे, कदुष्णं, अन्नावपि। ३-२-१४२ दिक्शब्दात्तीरस्य तारः वा । ३-२-१४९ समानस्य धर्मादिषु सः, सधर्मः अर्धर्चः श्रीपुरं द्वीपं शुद्धापं ॥ इति तत्पुरुषः ॥

३-१-९६ विशेषणं विशेष्येणैकार्थं कर्मधारयश्च चात् तत्पुरुषः,(११५ यावत् द्वयं) नीलोत्पलं मोपिकागवी, उभयोर्व्यवच्छेद्यव्यवच्छेदकत्वे द्रव्यशब्दाः प्रधानानुयाय्यप्रधानमिति न प्राग्, गुणक्रिययोः कामचारः, बाहुल्यात् नित्यं गौरखरादिषु जातिशब्देषु, तत्र भूयावयवाभिधायिनः परं। ३-१-१५८ कडारादयः कर्मधारये वा प्राक्, गौरगौतमः गौतमगौरः। ३-१-९७ पूर्वकालैकसर्वजरत्पुराणनवकेवलं परेण, स्नातानुलिप्तः लिप्तवासितं सर्वरात्रः नवोक्तिः केवलज्ञानं एकशाटः। ३-१-९८

दिगधिकं संज्ञातद्धितोत्तरपदे, उत्तरकोशलाः । ३-२-६१ सर्वादयोऽस्यादौ पुंवत् , पौर्वशालः, संज्ञातद्धितन्वान्नित्यं दाक्षिणगवधनः, बहुत्वाद्भूतपूर्वः । ३-१-९९ संख्या समाहारे च द्विगुश्चानाम्न्ययं संज्ञातद्धितोत्तरपदे, पञ्चाम्राः सप्तर्षयः द्वैमातुरः पञ्चगवधनः पञ्चराजी, अनाम्नि समासत्रयं, दाशार्हं, नेहाष्टौ प्रवचनमातरः,अनेकपर्यायोपनिपाते नैकापूपी । ३-१-१०० निन्द्यं कुत्सनैरपापाद्यैः, मुनिधूर्त्तः वैयाकरणखसूचिः याज्ञिककितवः मीमांसकदुर्दुरूढः कविचोरः । ३-१-१०१ उपमानं सामान्यैः, मृगीव मृगी सा चासौ चपला च मृगचपला, नियमः । ३-२-५७ पुंवत्कर्मधारये परतः स्त्र्यनूङ्, कल्याणप्रिया, कारकवृन्दारिकामाथुरवृन्दारिकाचन्द्रमुखवृन्दारिकाः ।७-३-१११ प्राणिन उपमानात् शुनोऽट्, व्याघ्रश्वः।७-३-११२ अप्राणिनि, शकटश्वः। ३-१-१०२ उपमेयं व्याघ्राद्यैः साम्यानुक्तौ, पुरुषवृषभः, स्तनकलशाद्याः । ३-१-१०३ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरं नाम्ना, वीरपुरुषः एकवीरः । ३-१-१०४ श्रेण्यादि कृताद्यैश्च्व्यर्थे, श्रेणिकृताः,ऊकपूगराशिनिचयविशिष्टनिर्धनकृपणइन्द्रदेवमुण्डभूतश्रवणवदान्यअध्यायकअध्यापकब्राह्मणक्षत्रियपटुपण्डितकुशलचपलनिपुणाः, मतमितभूतउप्तउक्तउपकृतअपाकृतकालितउदितदृष्टविहितआस्थिताः इत्याद्याः। ३-१-१०५ क्तं नञादिभिन्नैः, भुक्ताभुक्तं विन्नाविन्नं शाताशितं भुक्तविभुक्तं। ३-१-१०६ सेट् नानिटा क्तान्तं नञादिना भिन्नेन,-पवितमपूतं। ३-१-१०७ सन्महत्परमोत्तमोत्कृष्टं पूजायां, सत्पुरुषः महोदधिः। ३-१-१०८ वृन्दारकनागकुंजरैः पूजायां, गोनागः ३-१-१०९ कतरकतमौ जातिप्रश्ने, कतरकठः। ३-१-११० किं क्षेपे, किंराजा यो न रक्षति ।-७-३-७० न किमः क्षेपे समासान्तः । ३-१-१११ पोटायुवतिस्तोककतिपयगृष्टि ( सकृत्प्रसूता )-धेनु ( नवप्रसूता ) वशा ( वन्ध्या ) वेहत् ( गर्भघातिनी )-

बष्कयणी ( प्रौढवत्सा ) प्रवक्तृ (उपाध्यायः) श्रोत्रियाध्या-
यकधूर्त्तप्रशंसारूढैर्जातिः, आर्यपोटा ( पुंवेषा गर्भदासी
उभयव्यञ्जना भुजिष्यदासी वा ) आविष्टलिङ्गाः गोमतल्लिका
गोमचर्चिका गोप्रकाण्डं आर्यमिश्राः, आविष्टवचनाः तातश्च
ते पादाश्च तातपादाः, भिन्नलिङ्गयोरग्निस्तोकं, आश्रयकुत्सा-
यां मृगधूर्त्तः । ३-१-११२ चतुष्पाद्गर्भिण्या, गोगर्भिणी
। ३-१-११३ युवा खलतिपलितजरद्वलिनैः, युवरजन्
। ३-१-११४ कृत्यतुल्याख्यमजात्या, भोज्योष्णं सदृशमहान्
। ३-१-११५ कुमारः श्रमणादिना, कुमारश्रमणा, प्रव्र-
जिताकुलटागर्भिणीतापसीबन्धकीदासीअध्यापकअभिरूपकपटुमृ-
दुपण्डितकुशलचपलनिपुणाः, श्रमणकुमारः (कर्मधारयतत्पुरुषौ) ।
३-१-११६ मयूरव्यंसकेत्यादयः तत्पुरुषाः, मयूरव्यंसकः
कम्बोजमुण्डः एहीडादयोऽन्यपदार्थे, आख्यातमाख्यातेन सातत्ये
एहिरेयाहिरा अहमहमिका यदृच्छा, ह्रान्तं स्वकर्मणाऽऽभीक्ष्ण्ये

कर्त्तरि जहिस्तम्बः, प्रोष्यपापीयान् उच्चावचं उच्चनीचं अकिञ्चनं
अकुतोभयं गतप्रत्यागते गतागतं शाकपार्थिवः यष्टिमौद्गल्यः
घृतरोटिः त्रिविद्या एकादश गुडधानाः, अविहितलक्षणोऽत्र
विस्पष्टपटुः पादहारकः प्रातराशः । समासोऽप्युत्तरेणेति ।
७-३ ९५ जातमहद्वृद्धादुक्ष्णः कर्मधारयादत् । ३-२-६८
महतः करघासविशिष्टे डाः वा, महाकारः, कराणां समूहः
कारः॥ ३-२-६९ स्त्रियां, महाकारः । ३-२-७० जातीयैकार्थ्ये-
ऽच्वेः, महाक्षः । ७-३-१०० द्वित्रेरायुषः समाहारेऽद्, द्व्यायुषं
।७-३-१०१ वांजलेरलुकः द्विगोर्द्वित्रेः, द्व्यंजलं द्व्यंजलि, लुकि
द्व्यंजलिर्घटः । ७-३-१०२ खार्या वा, पंचखारि पंचखारं
।७-३-१०३ वार्धाच्च, अर्धखारं अर्धखारी । ७-३-१०४ नावः,
अर्धनावं पंचनावी । ३-२-७३ हविष्यष्टनः कपाले दीर्घोऽन्तः,
अष्टाकपालं हविः । ३ २-७४ गवि युक्ते । ३-२-७५ नाम्नि,
अष्टापदम् अष्टागवं ( त्रिपदः ) । ३-२-९२ द्वित्र्यष्टानां द्वात्र-

योऽष्टाः प्राक् शतादनशीतिबहुव्रीहौ, द्वादश त्रयस्त्रिंशत् अष्टात्रिंशत् द्व्यशीतिः । ३-२-९३ चत्वारिंशदादौ वा द्वात्रयोऽष्टाः । ३-२-९१ एकादश षोडश षोडत्षोढा षड्ढा, षोडन्तौ, षोडन् धि षट्धापि चेति । ३-२-१२ओजोऽजःसहोऽम्भस्तमस्तपसष्टः,न लुप्,तपसाकृतं असमस्तस्य,तमसः तपसश्च नेति। ३-२-१३ पुंजनुषोऽनुजान्धे, पुंसानुजः । ३-२-१४ आत्मनः पूरणे । ३-२-१५ मनसश्चाज्ञायिनि आत्मनाज्ञायी, नात्मन इति ।३-२-१६ नाम्नि, मनसादेवी।३-२-१७परात्मभ्यां ङेः,परस्मैपदं अनादिनाम्नि । ३-२-२१ मध्यान्ताद् गुरौ ङेः।३-२-२२ अमूर्धमस्तकात्स्वांगादकामे अद्व्यंजनात् । ३-२-२३ बन्धे घञि नवा, हस्तेबन्धः हस्तबन्धः। ३-२-२४ कालात्तनतरतमकाले वा। ३-२-२५ शयवासिवासेष्वकालात् वा, बाहुल्यान्मनसिशयः हृच्छयः। ३-२-२६ वर्षक्षराप्सरःशरोरोमनसो जे वा, अप्सुजं अब्जं। ३-२-२७ द्युप्रावृट्वर्षाशरत्कालात् जे न लुप् । ३-२-२८ अपो ययोनिमतिचरे, अप्सुचरः, ते वै विधयः सुसंगृहीता येषां लक्षणं प्रपंचश्च । ३-२-२९ नेन्सिद्धस्थे, समवर्त्ती, संज्ञोत्तरेत्यनित्य इतीनन्ते, द्वौ नञौ प्रकृतमर्थं गमयत इति विधिः । ३-२-३० षष्ठ्याः क्षेपे न । ३-२-३१ पुत्रे वा । ३-२-३२ पश्यद्वाग्दिशो हरयुक्तिदण्डे । ३-२-३४ देवानां प्रियः । ३-२-३५ शेपपुच्छलांगूलेषु नाम्नि शुनः, अनामार्थे सिंहस्यशेपाद्यर्थं च बहुत्वं । ३-२-३६ वाचस्पतिवास्तोष्पतिदिवस्पतिदिवोदासं । ३-२-३७ ऋतां विद्यायोनिसम्बन्धे, होतुःपुत्रः । ३-२-३८ स्वसृपत्योर्वा ऋतां विद्यायोनिसम्बन्धे । २-३-१८ मातृपितुः स्वसुः षः, मातृष्वसा । २-३-१९ अलुपि वा, मातुःष्वसा मातुःस्वसा। २-३-२५ गवियुधेः स्थिरस्य । २-३-१६ समासेऽग्नेः स्तुतः, अग्निष्टुत् । २-३-१७ ज्योतिरायुर्भ्यां च स्तोमस्य, अग्निष्टोमः । २-३-२८ विकुशामिपरेः स्थलस्य, विष्ठलं । २-३-२९ कपेर्गोत्रे, कापिष्ठलं । २-३-३०

गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निशेकुशङ्कुक्वङ्गुमञ्जिपुञ्जिबर्हिःपरमेदिवेः स्थस्य, अंगुष्ठः दिविष्ठः । २-३-३१ निर्दुस्सोः सेधसन्धिसाम्नाम्, सुषन्धिः। २-३-३२ प्रष्ठोऽग्रे। २-३-३३ भीरुष्ठानादयः, अंगुलिषङ्गः परमेष्ठी। ७-३-७७ धुरोऽनक्षस्यात्, रणधुरा। ७-३-७९ उपसर्गादध्वनः, प्राध्वः। ७-३-८० समवान्धात्तमसः, सन्तमसं। ७-३-८३ ब्रह्महस्तिराजपल्याद्वर्चसः, पल्यवर्चसम्। ३-२-७६ कोटरमिश्रकसिध्रकपुरगसारिकस्य वणे नाम्नि दीर्घः, कोटरावणं, नियमात्कुबेरवनं। ३-२-७७ अञ्जनादीनां गिरौ दीर्घः, किंशुकसाल्वलोहितनलपिङ्गलाः । ३-२-७८ अनजिरादिबहुस्वरशरादीनां मतौ, अमरावती शरावती। ३-२-७९ ऋषौ विश्वस्य मित्रे, विश्वामित्रः। ३-२-८० नरे, विश्वानरः। ३-२-८५ गतिकारकस्य नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ दीर्घः, परीणत्, भीरुष्ठानादित्वाद् ऋतीषद्, रुजीषडपि। ३-२-८६ घञ्युपसर्गस्य बहुलं, नीवारः दक्षिणापथः अन्धातमसं अंधतमसं अधीपादः पूरुषः। ३-२-८७ नामिनः काशे अचि, नीकाशः,निकाशः। ३-२-८९ अपील्वादेर्वहे, मुनीवहं। ३-२-९० शुनः, श्वादन्तः, प्रवृत्तीतरविकल्पान्यैर्बाहुल्यं, श्वकल्पः श्वापुच्छं श्वपुच्छं श्वापदं ( व्याघ्रादिः ) ॥ इति कर्मधारय ॥

३-१-२२ एकार्थं चानेकं च, चादव्ययमेकं च, द्वितीयाद्यन्यस्यार्थे समानाधिकरणे बहुव्रीहिः, आरूढो वानरो यं स आरूढवानरः। ३-१-१५१ क्ताः प्राक्, ऊढरथः उपहृतबलिः भीतशत्रुः चित्रगुः वीरपुरुषकः, सुसूक्ष्मजटकेशः बहुत्वान्न स्पर्धः, उच्चैर्मुखः। ३-१-२१ अव्ययं ऐकार्थ्ये द्वितीयाद्यन्यार्थे संख्यया, उपदशाः। ७-३-७२ बहोर्डे न डः कच् च, उपबहवः ।३-२-४९ परतः स्त्री पुंवत् स्त्र्येकार्थेऽनूङ्, दर्शनीयभार्यः; पट्वीमृदुभार्यः ( नाद्यस्य )। ३-२-५३ नाप्प्रियादौ स्त्र्येकार्थे पुंवत् , कल्याणीपञ्चमाः कल्याणीप्रियः, प्रियामनोज्ञा-

कल्याणी सुभगा-दुर्भगा-स्वा-क्षान्ता-कान्ता-वामना-समा-सचिवा-चपला-बाला-तनया-दुहितृ-भक्तय॥७-३-१२० पूरणीभ्यस्तत्प्रा धान्येऽप्। ३-२-७१ न पुंवन्निषेधे महतो डाः, महतीप्रियः। ७-३-१७० इनः कच् स्त्रियां, वहुदण्डिका। ७-३-१७१ ऋन्नित्यदितः कच्, कल्याणीपञ्चमीकाः वहुभर्तृकः। ३-२-५४ तद्धिताककोपान्त्यपूरण्याख्याः न पुंवत्, लाक्षिकीदेश्या। ३-२-५५ ताद्धितः स्वरवृद्धिहेतुररक्तविकारे, नादेयीचरी, वृद्धिहेतुर्ङ्णिदिति। ३-२-५६ स्वाङ्गाद् ङीर्जातिश्चामानिनि, सुकेशीभार्यः कठीभार्यः कुमारीभार्यः, आजन्मनाशं सामान्यमिति। ३-२-५८ रिति पुंवत् अनूङ्, पट्टदेशीया। ३-२-५९ त्वते गुणः पुंवत्, पटुत्वं, अजातिसंज्ञस्य विशेषणस्येति। ३-२-६० च्वौ क्वचित्, महद्भूता। ३-२-६२ मृगक्षीरादिषु वा। ३-२-६३ ऋदुदित्तरतमरूपकल्पब्रुवचेलड्गोत्रमतहते वा ह्रस्वश्च, च्चात् पुंवत्, श्रेयसितरा श्रेयस्तरा प्रियपुंसितरा प्रियपुंस्तरा। ३-२-६४ ङ्यः तरादिषु ह्रस्वः, गौरितरा गौरित्रुवा। ३-२-६५ भोगवद्गौरिमतोर्नाम्नि तरादौ ह्रस्वः। ३-२-६६ नवैकस्वराणाम् तरादिषु, ज्ञितमा ज्ञीतमा, नित्यदितामनेकस्वराणामप्राप्ते इति। ३-२-६७ ऊङः तरादौ, भीरुहता भीरूहता। ३-२-५० क्यङ्मानिपित्तद्धिते परतः स्त्री पुंवत्, श्येतायते श्येतमानी अजथ्यं। ३-२-५१ जातिश्च णितद्धितयस्वरे, चात् परतः स्त्री, पटयति एत्यः भावत्कं दारदः हास्तिकं, विषयसप्तम्या लघ्वादित्वादाणि पाटवं। ३-२-५२ एयेऽग्नायी, आग्नेयः। ३-१-२० आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे संख्यया बहुव्रीहिः, आसन्नविंशाः॥७-३-१२८प्रमाणीसंख्याड्डः॥ ७-४-६७ विंशतेस्तेर्डिति लुक्, स्त्रीप्रमाणाः। ३-१-१४७वाऽन्तिके एकः द्वन्द्वे, गोमहिषं आसन्नदशं, द्वन्द्वानुप्रयोगोऽत्र, आदशभ्यः संख्या संख्येये वर्तते न संख्याने इत्यनित्यः। ३-१-२३ उष्ट्रमुखादयः, कण्ठेकालः उरसिलोमा। ३-१-२४ सहस्तेन, सपुत्रः

। ३-२-१४३ सहस्य सोऽन्यार्थे । ३-२-१४४ नाम्नि, साश्वत्थं । ३-२-१४५ अदृश्याधिके, साग्निः कपोतः समाषः ओदनः। ३-१-२५दिशो रूढ्याऽन्तराले,पूर्वोत्तरा । ३-२-१४८ नाशिष्य-गोवत्सहले सहस्य सः। ७-३-१२५ बहुव्रीहेः काष्ठे टः अंगुलेः, द्व्यंगुलं । ७-३-१२६ सक्थ्यक्ष्णः स्वाङ्गे टः, दीर्घाक्षः । ७-३-१२७ द्वित्रेर्मूर्ध्नो वा, त्रिमूर्धः त्रिमूर्धा। ७-३-१३२ अन्तर्ब-हिर्भ्यां लोम्नः अप् , अन्तर्लोमः। ७-३-१३३ भान्नेतुः, मृग-नेत्राः। ७-३-१६० खरखुरान्नासिकाया नस् नाम्नि, खरणाः । ७-३-१६१ अस्थूलाच्च नसः नासिकायाः, द्रुणसः खरणसः ।२-३-६४पूर्वपदस्थान्नाम्न्यगः नो णः,गणनिर्दिष्टस्यानित्यत्वाभ्म ऋगयनस्य क्षुभ्नादिगणे पाठः। ७-३-१६२ उपसर्गात् , यत्रो-पसर्गत्वं न संभवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते, न संभवत्युपस-र्गत्वे इति प्रादिशब्दात्। २-३-६५ नसस्य णः, प्रणसः ७-३-१६३ वेः खुखग्रं, विग्रः। ७-३-१२९ सुप्रातसुश्वसुदिवशारिकुक्ष-चतुरस्रैणीपदाजपदप्रोष्ठपदभद्रपदं। ७-३-१३६ नञ्सुदु-र्भ्यः सक्तिसक्थिहलेर्वाऽप्, अहलः अहलिः । ७-३-१३७ प्रजाया अस्, दुष्प्रजसः। ७-३-१३८ मन्दाल्पाच्च मेधायाः अस्, सुमेधाः। ७-३-१४१ द्विपदाद्धर्मादन् , सुधर्माणः। ७-३-१४२ सुहरिततृणसोमाज्जम्भात् , सुजम्भानौ। ७-३-१४३ दक्षिणेर्मा व्याधयोगे।७-३-१५५संप्राज्जानोर्ज्ञुज्ञौ,प्रज्ञुःप्रज्ञः ।७-३-१५६ वोर्ध्वात् , ऊर्ध्वज्ञुः ऊर्ध्वजानुः।७-३-१५७ सुहृद्दु-र्हृन्मित्रामित्रे। ७-३-१५८ धनुषो धन्वन्। ७-३-१५९ वा नाम्नि, पुष्पधन्वा पुष्पधनुः। ७-३-१६४ जायाया जानिः, प्रियजानिः।७-३-१४४ सुपूत्युत्सुरभेर्गन्धादिद् गुणे,सुगन्धिः ।७-३-१४५ वाऽऽगन्तौ,सुगन्धं सुगन्धि वा शरीरं। ७-३-१४६ वाऽल्पे इत्। ७-३-१४७ वोपमानात्। ७-३-१४८ पात्पाद-स्याहस्त्यादेः, सिंहपात्, हस्तिअश्वकटोलगण्डोलगण्डमहेला-दासीगणिकाकपोतअजा। ७-३-१४९ कुम्भपद्यादिः, सूत्रपदी

मुनिपदी विष्णुपदी अष्टापदी इत्याद्याः २६। ७-३-१५१वयसि दन्तस्य दतृः सुसंख्यात् ,सुदती । ७-३-१५२ स्त्रियां नाम्नि, अयोदती । ७-३-१५३ श्यावाऽरोकाद्वा नाम्नि । ७-३ १५४ वाऽग्रान्तशुद्धशुभ्रवृषवराहाहिमूषिकशिखरात्, कुड्मलाग्रदन् शुद्धदन्ती । ७-३-१६५व्युदः काकुदस्य लुक् । ७-३-१६६ पूर्णाद्वा ७-३-१६७ ककुदस्यावस्थायां, अककुद् । ७-३-१६८ त्रिककुद्गिरौ । ७-३-१७२ दध्युरःसर्पिर्मधूपानच्छालेः कच्, प्रियोपानत्कः। ७ ३-१७३ पुमनडुन्नौपयोलक्ष्म्या एकत्वे, प्रियपुंस्कः।७-३-१७४ नञोऽर्थात् , अनर्थकं ।७-३-१७५शेषाद्वा, बहुखट्वकः बहुखट्वः ७ ३-१७६ न नाम्नि, विश्वयशाः । ७-३-१७७ ईयसोः, बहुश्रेयसी । ७-३-१७८ सहात्तुल्ययोगे, सपुत्रः। ७-३-१६९ भ्रातुः स्तुतौ, सुभ्राता । ७-३-१८०नाडीतन्त्रीभ्यां स्वाङ्गे, अपारिभाषिकेऽगीति । ७-३-१८१ निष्प्रवाणि प्रवाणिस्तन्तुवायशलाका।७-३-१८२सुभ्र्वादिभ्यः न,कोमलोरुः

३-१-१५२जातिकालसुखादेर्नवा प्राक् क्ताः,कृतकटः कटकृतः, आकृतिगणोऽयमिति सुखदुःखतृप्रकृच्छ्रअस्त्रअलीककरुणकृपणसोढप्रतीपाः। ३-१-१५३ आहिताग्न्यादिषु, पीतघृतः घृतपीतः। ३-१-१५४ प्रहरणात्, अस्युद्यतः उद्यतासिः। ३-१-१५५ न सप्तमीन्द्वादिभ्यश्च चात् प्रहरणात्, चन्द्रमौलिः असिपाणिः। ३-१-१५६ गड्वादिभ्यः,शिरस्यरुः अरुःशिराः, व्यवस्थितविकल्पाद् वहेगडुः। ३-१-१५७प्रियः, प्रियगुडः गुडप्रियः ।३-१-१५० विशेषणसर्वादिसंख्यं बहुव्रीहौ प्राक्, कण्ठेकालः सर्वशुक्लं द्विपुत्रः द्व्यन्यः सर्वकप्रियः। ३-१-१९ सुज्वाऽर्थे संख्या संख्येये संख्यया बहुव्रीहिः, द्विर्दश द्विदशाः । ३-१-१६२ संख्या समासे क्रमेण, द्वौ त्रयो वा द्वित्राः। २-३-२६ एत्यकः नाम्यादेः सः षः, हरिषेणः । २-३-२७ भादितो वा एति षः, रोहिणिसेनः। रोहिणिषेणः। ७-३-७८ संख्यापाण्डूदक्कृष्णाद् भूमेरत् । ७ ३-८१ तप्तान्ववाद्रहसः, अवरहसम् । ७-३-८५

अक्ष्णोऽप्राण्यङ्गे, गवाक्षः । ७-३-१३१ नञ्सुव्युपत्रेश्चतुरः अप्, त्रिचतुराः, । ३-२-८३ चितेः कचि दीर्घः, एकचितीकः। ३-२-८४ स्वामिचिह्नस्याविष्टाष्टपञ्चभिन्नच्छिन्नाच्छिद्रस्रुव-स्वस्तिकस्य कर्णे दीर्घः, शंकूकर्णः द्व्यगुंलाकर्णः । ३-२-१०९ द्व्यन्तरनवर्णोपसर्गादप ईप्, द्वीपं । ३-२-११०अनोर्देश उप । ३-२-१५० सब्रह्मचारी । ३-२-१५१ दृग्दृशदृक्षे समानस्य सः । ३-१-१५३ इदंकिमीत्की दृगादौ, ईदृक् कीदृक् । २-९-९३ पदेऽन्तरेऽनाङ्यतद्धिते न णः, मापकुम्भवापेन। १-१-४१ कसमासेऽध्यर्धः संख्यावत्, अध्यर्धसूर्पं । १-१-४२ अर्धपूर्वपदः पूरणः, अर्धपंचमसूर्पं । २-४-८४ बन्धौ बहुव्रीहौ केवले ध्य ईञ्, कारीषगन्धीवन्धुः।२-४-८५ मातमातृमातृके वा, कारीषगन्धीमातः कारीषगन्ध्यामातः। ७-४-१२२ समर्थः पदविधिः, सामर्थ्यं व्यपेक्षा एकार्थीभावश्च, माता कारीषगन्ध्या, माता चैत्रस्य । ७-४-१०२ प्रश्नार्चाविचारे च सन्धेयसन्ध्यक्षर-स्यादू इदुत्परः, चात्रत्यभिवादे, ७ ४-१०३ तयोर्य्वौ स्वरे संहितायां, व्रस्तव्यं किं निर्ग्रन्थस्य साग्नाइ वुतानग्नौ ।

॥ इति बहुव्रीहिः ।

३-१-११७ चार्थे द्वन्द्वः सहोक्तौ, इतरेतरयोगे(उद्भूतावयवभेदः) समाहारे (तिरोहितावयवभेदः) च,समुच्चये (क्रियाकारकद्रव्यगुणानामात्मरूपभेदेन चीयमानता) अन्वाचये (गुणप्रधानभावः)च न, चैत्रमैत्रदत्ताः, एकविंशत्याद्या एकवचने संख्येयत्वात्, उदूखलमुशलं, जम्पती दम्पती नरनारायणौ मैत्रः। पचति पठति च, भिक्षामट गां चानय । ३-१-११८ समानामर्थेनैकः शेषः, शुक्लश्च श्वेतश्च शुक्लौ श्वेतौ वा, बहुत्वमतन्त्रं। ३-१-१२० त्यदादिः शेषः, स च चैत्रश्च तौ , अहं च स च त्वं च वयं, वाहुल्यात् स च यश्च तौ, स्त्रीपुंनपुंसकानां परं, तच्च चैत्रश्च ते । परलिङ्गोऽयम् । ३-१-१२१ भ्रातृपुत्राः स्वसृदुहितृभिः शिष्यन्ते, भ्राता च भगिनी च भ्रातरौ,बहुत्वातपर्यायाः३-१-१२१

पिता मात्रा वा, पितरौ मातापितरौ । ३-२-३९ आ द्वन्द्वे पूर्वस्वर्तः विद्यायोनिसम्बन्धे,होतापोतारौ, बहूनां होतृपोतृनेष्टोद्गातारः, स्वसादुहितरावपि। ३-२-४०पुत्रे, होतापुत्रौ । ३-१-१२३ श्वशुरः श्वश्रूभ्यां वा, श्वशुरौ, धवयोगे जातौ च। ३-१-१२४ वृद्धो यूना तन्मात्र भेदे,गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ।३-१-१२५ स्त्री ( वृद्धे ) पुंवच्च, गार्गी च गार्ग्यायणश्च गार्ग्यौ।३-१-१२६ पुरुषः स्त्रिया, पट्वी च पटुश्च पटू, न प्रकृतिभेदे, अर्थभेदे स्यादपि च। ३-१-१२७ग्राम्याशिशुद्विशफसङ्घे स्त्री प्रायः, गावश्च गावश्च इमा गावः, संघ एव । ३-१-१२८ क्लीबमन्येनैकं च वा, शुक्लं च शुक्लश्च शुक्लं शुक्ले वा, द्वन्द्वैकत्वेति क्लीबता । ३-१-१२९ पुष्यार्थाद्भे पुनर्वसुः द्व्यर्थ एकः, पुष्यपुनर्वसू । ३-१-१५९ धर्मार्थादिषु द्वन्द्वे यथाकामं प्राक्, धर्मार्थौ अन्तादी चन्द्रार्कौ वृद्धिगुणौ चन्द्रराहू । ३-१-१६०लघ्वक्षरासखीदुत्स्वराद्यदल्पस्वरार्च्यमेकं प्राक्, तिलमाषं अग्निधूमं ( वसुपती पतिवसू ) बहुसखिबहुधनौ, अश्वशस्त्रं धवपलाशौ श्रद्धामेधे, स्पर्धे परमेकं । ३-१-१६१ मासवर्णभ्रात्रनुपूर्वम् । ३-१-१६२ भर्तुतुल्यस्वरं क्रमेण प्राग् । ७-३-९८ चवर्गदषहः समाहारे अत्, वाक्त्वचं। ७-३-९६ स्त्रियाः पुंसो द्वन्द्वाच्चात्, स्त्रीपुंसं, चाद् कर्मधारये स्त्रीपुंसः । ७ ३-९७ ऋक्सामर्ग्यजुषधेन्वनडुहवाङ्मनसाहोरात्ररात्रिंदिवनक्तंदिवाहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवं। ३-१-१३० विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः एकार्थः, सुखदुःखं सुखदुःखे । ३-१-१३१ अश्ववडवपूर्वापराधरोत्तराः वा, पूर्वापरौ पूर्वापरं । ३-१-१३२ पशुव्यञ्जनानां स्वैः, गोमहिषं गोमहिषौ शाकसूपं शाकसूपौ । ३-१-१३३ तरुतृणधान्यमृगपक्षिणां बहुत्वे स्वैर्वा।३-१-१३४ सेनाङ्गक्षुद्रजन्तूनां स्वैर्बहुत्वे । ३-१-१३५ फलस्य जातौ स्वैर्बहुत्वे । ३-१-१३६ अप्राणिपश्वादेः द्रव्यस्य जातौ, तरुशैलं । ३-१-१३७ प्राणितूर्याङ्गाणाम्, पाणिपादं । ३-१-१३८

चरणस्य (कठादेः) स्थेणोऽद्यतन्यामनुवादे, उदगात् कठ-कौथुमम्।३-१-१३९ अक्लीबेऽध्वर्युक्रतोः, अर्काश्वमेधं।३-१-१४० निकटपाठस्य, क्रमकपादिकं। ३-१-१४१ नित्यवैरस्य, ब्राह्मण-श्रमणं आहिनकुलं।३-१-१४२नदीदेशपुरां विलिङ्गानां स्वैः,मथुरापाटलिपुत्रं। ३-१-१४३पात्र्यशूद्रस्य, तक्षायस्कारं। ३-१-१४४ गवाश्वादिः, पुत्रपौत्रं उष्ट्रखरं मूत्रपुरीषं कुब्जवामनं।३-१-१४५ न दधिपयआदिः, आद्यवसाने सूर्याचन्द्रमसौ। ३-२-४१ वेदसहश्रुतावायुदेवतानाम् आः, सोमारुद्रौ। ३-२-४२ ईः षोमवरुणेऽग्नेः, अग्नीषोमौ। ३-२-४३ इर्वृद्धिमत्यविष्णौ, आग्निवारुणं। ३-२-४४ दिवो द्यावा, द्यावागोत्रे। ३-२-४५ दिवस् दिवः पृथिव्यां वा, दिवःपृथिव्यौ, द्यावापृथिव्यौ च। ३-२-४६ उषासोषसः, उषासासूर्यम्। ३-२-४७ मातरपितरं वा। ३-१-१४६ संख्याने नैकः,दश हस्त्यश्वाः। इत्येकशेषाः।

३-२-१परस्परान्योऽन्येतरेतरस्याम् स्यादेर्वाऽपुंसि, परस्परां परस्परं वा भोजयतः सख्यौ कुले वा।३-२-४८ वर्चस्कादिष्ववस्करादयः, अपस्करो रथाङ्गे, आस्पदं प्रतिष्ठायाम्,आश्चर्यमद्भुते, मस्करो वेणुदण्डयोः, करस्करो गिरिवृक्षयोः,आस्कथं नगरे, प्रायश्चित्तमतीचारशोधने, गोष्पदं सेविते प्रमाणे च।३-२-९४ हृदयस्य हृल्लासलेखाण्ये, हृद्यं, हृदैव सिद्धेऽन्यप्रयोगनिवृत्तये। ३-२-९५ पदः पादस्याज्यातिगोपहते, पदाजिः पदोपहतः।३-२-९६ हिमहतिकापिये पद्, पत्काषी। ३-२-९७ ऋचः शसि, पच्छः। ३-२-९८ शब्दनिष्कघोषमिश्रे वा, पादमिश्रः पन्मिश्रः।३-२-९९ नस् नासिकायास्तःक्षुद्रे, नस्तः नःक्षुद्रः। ३-२-१०४ उदकस्योदः पेषंधिवासवाहने।३-२-१०५ वैकव्यञ्जने पूर्ये, उदघटः उदकघटः। ३-२-१०६ मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे वा, उदगाहः उदकगाहः। ३-२-१०७। नाम्न्युत्तरपदस्य च, उदपानं क्षीरोदः। ३-२-१०८ ते लुग्वा पूर्वोत्तरपदे, भीमः सेनः। ३-२-१३८

कृत्येऽवश्यमो लुक्, अवश्यकार्यम् । ३-२-१३९ समस्ततद्धिते वा । ३-२-१११ खित्यनव्ययारुषो मोऽन्तो ह्रस्वश्च । ३-२-११२ सत्यागदास्तोः कारे, अस्तुंकारः । ३-२-११३ लोकम्पृणमध्यन्दिनाऽनभ्याशमित्यं, लोकम्प्रीण इति । ३-२-११४ भ्राष्ट्राग्नेरिन्धे मोऽन्वः । ३-२-११५ अगिलाद्गिलगिलगिलयोः, तिमिंगिलः । ३-२-११६ भद्रोष्णात्करणे, उष्णंकरणम् । ३-२-११७ नवा खित्कृदन्ते रात्रेः, रात्रिमटः रात्र्यटः । ३-२-११८ धेनोर्भव्यायाम्, धेनुम्भव्या धेनुभव्या । ३-२ १२५ पृषोदरादयः, बलाहकः २-४-९८ वेदूतोऽनव्ययय्वृदीच्ङीयुवः पदे, लक्ष्मिपुत्रः लक्ष्मिपुत्रः । २-४-१०१ भ्रुवोऽच्च कुंसकुट्योः । २-४-१०२ मालेषीकेष्टकस्यान्तेऽपि भारितूलचिते, इष्टकचितं ।

॥ इति समासप्रकरणम् ॥

—०—

आख्यातख्यातमाहिमा, कृदन्तावाप्तसिद्धिकः ।
संप्राप्तप्राकृतस्थामा, जयताज्जगदीश्वरः ॥ १ ॥

। ३-३-३ क्रियार्थो धातुः, आयाद्यन्ता अपि, पूर्वापरीभूतं भावं आख्यात आचष्टे, साध्यं क्रिया, अनव्ययकृदभिहितो भावो द्रव्यवत्प्रकाशत इति घञादिः सत्त्वं तुमादिरसत्त्वं च सिद्धमाह।३-३-४ प्रादिरप्रत्ययःन धातुः, अमहापुत्रीयत् प्रासादीय्य भृशं प्राप्ति । ५-२-१९ सति प्रारब्धापरिसमाप्तक्रियाप्रबंधे वर्तमाना, प्रवृत्तोपरत-वृत्ताविरत-नित्यप्रवृत्त-सामीप्यभेदात्। ३-३-६ वर्त्तमाना, तिव् तस् अन्ति, सिव् थस् थ, मिव् वस् मस्। ते आते अन्ते, से आथे ध्वे, ए वहे महे, धातोः। ३-३-१९ नवाऽऽद्यानि शतृक्वसू च परस्मैपदं सर्वासु। ३-३-२२ इङितः कर्त्तर्यात्मने।३-३-९५ ईंगितः फलवति (फलं सदसद्वा विवक्षानिबन्धनं)। ३-३-२०पराणि कानानशौ चात्मनेपदं।३-३-१०० शेषात्परस्मै। ३-३-१७ त्रीणि त्रीण्यन्ययुष्मदस्मदि उप-

पदे, योगे परः, युष्मदो गौणत्वात्त्वद्भवति। ३-३-१८ एकाद्विब-
हुषु त्रीणि, भू सत्तायां, नामधातुपदे धातुमूले, धातूपसर्गनि-
पाता अनेकार्थास्तेनोत्पत्त्यर्थश्च। ३-४-७१ कर्त्तर्यनद्भ्यः शव्
शिति। ३-३-१० एताः शितः वर्त्तमानासप्तमीपंचमीह्यस्तन्यः
।४-३-१ नामिनो गुणोऽक्ङिति, भवति, गौणमुख्ययोर्मुख्य इति
।४-३-१ नामिनो गुणोऽक्ङिति, भवति, गौणमुख्ययोर्मुख्य इति
नीभ्यां। ४-३-२० शिदवित् ङित्, शवा गुणः, भवतः। लुग-
स्ये ति भवन्ति भवसि भवथः भवथ। ४-२-११३ मव्यस्याः,
भवामि भवावः भवामः ५-४-२८ विधि(प्रेरणा) निमंत्रणा-
(नियोगः) ऽऽमंत्रणा(कामचारः)धीष्ठ(ससत्कारं) संप्रश्नप्रार्थने
सप्तमीपंचम्यौ, कुर्यात्कटमावश्यकं स्थानं व्रतं व्याकरणमुत
सिद्धांतं तर्कं वाऽधीयीय। ३-३-७ सप्तमी, यात् याताम्
युस्, यास् यातम् यात, याम् याव याम। ईत ईयाताम्
ईरन्, ईथास् ईयाथाम् ईध्वं, ईय ईवहि ईमहि। ४-२-१२२
यः सप्तम्याः अत इः, भवेत् भवेताम्। ४-२-१२३ याम्युसो-
रियमियुसौ अतः, भवेयुः, भवेः भवेतं भवेत, भवेयं भवेव भवेम
।५-४-३८ आशिष्याशीःपञ्चम्यौ।३-३-८ पंचमी, तुव् ताम्
अन्तु, हि तम् त, आनिव् आवव् आमव्। ताम् आताम्
अन्ताम्, स्व आथाम् ध्वम्, ऐव् आवहैव् आमहैव्, भवतु
। ४-२-११९ आशिषि तुह्योस्तातङ् वा, भवतात् भवताम्
भवन्तु। ४-२-८५ अतः प्रत्ययाल्लुक् हेः, भव भवतात् भवतं
भवत, भवानि भवाव भवाम। ५-२-७ अनद्यतने भूते ह्यस्त-
नी, उभयतःसार्धरात्रमहोऽद्यतनः। ३-३-९ ह्यस्तनी, दिव् ताम्
अन्, सिव् तं त, अम्व् व म। त आताम् अन्त, थास्
आथाम् ध्वं, इ वहि महि।४-४-२९अड् धातोरादिर्ह्यस्तन्यां
चामाङा, चाद्यतनीक्रियातिपत्त्योः, विषयविज्ञातात्प्रत्ययान्यः
वधानेऽपि, अभवत् अभवताम् अभवन्, अभवः अभवतम् अभ-
वत, अभवं अभवाव अभवाम। ५-२-४ अद्यतनी भूते। ३-३-११
अद्यतनी, दि ताम् अन्, सि तम् त, अम् व म। त आताम्

अन्त, थास् आथाम् ध्वं, इ वहि महि। ३-४-५३ सिजद्य-
तन्यां धातोः।४-४-३२ स्ताद्यशितोऽत्रोणादेरिट्। ४-३-६६
पिबैतिदाभूस्थः सिचो लुप् परस्मै न चेट्। ३-३-५ अवौ
दाधौ दा। ४-३-१२ भवतेः सिज्लुपि न गुणः, अभूत् अभू-
ताम्। ४-२-४३ भुवो वः परोक्षाद्यतन्योः उपान्त्यस्योत्,
अभूवन्, अभूः अभूतं अभूत, अभूवं अभूव अभूम। ५-२-१२
परोक्षे भूते परोक्षा। ३-३-१२परोक्षा, णव् अतुस् उस्, थव्
अथुस् अ, णव् व म। ए आते इरे, से आथे ध्वे, ए वहे महे।
४-१-१ द्विर्धातुः परोक्षाङे प्राक्तु स्वरे स्वरविधेः।४-१-७०
भूस्वपोरदुतौ पूर्वस्य। ४-१-४२ द्वितीयतुर्ययोः पूर्वौ प्रथम-
तृतीयौ पूर्वस्य, बभूव बभूवतुः बभूवुः। ४-४-८१ स्कसृवृभृ-
स्तुद्रुश्रुस्त्रोर्व्यंजनादेः परोक्षायाः आदिरिट्, बभूविथ बभूवथुः
बभूव बभूव बभूविव बभूविम। ३-३-१३ आशीः, क्यात् क्या-
स्ताम् क्यासुस्, क्यास् क्यास्तं क्यास्त, क्यासम् क्यास्व
क्यास्म। सीष्ट सीयास्ताम् सीरन्, सीष्ठास् सीयास्थां
सीध्वं, सीय सीवहि सीमहि, भूयात्। ५-३-५ अनद्यतने
श्वस्तनी वर्त्स्यदर्थात् धातोः, न व्यामिश्रे, श्वो भविष्यतीत्यत्र
पदार्थे क्रिया पश्चात् श्वसा योगः। ३-३-१४ श्वस्तनी, ता तारौ
तारस्, तासि तास्थस् तास्थ, तास्मि तास्वस् तास्मस्।
ता तारौ तारस्, तासे तासाथे ताध्वे, ताहे तास्वहे
तास्महे, भविता। ५-३-४ भविष्यन्ती वर्त्स्यदर्थात् ।३-३-१५
भविष्यन्ती, स्यति स्यतस् स्यन्ति, स्यसि स्यथस् स्यथ,
स्यामि स्यावः स्यामः, स्यते स्येते स्यन्ते, स्यसे स्येथे स्यध्वे,
स्ये स्यावहे स्यामहे, भविष्यति। ५-४-९ सप्तम्यर्थे (हेतुफ-
लादेः) क्रियातिपत्तौ क्रियातिपत्तिः एष्यति, गुरूपासकोऽभ-
विष्यत् शास्त्रपारगोऽभविष्यत्। ५-४-१० भूते पूर्ववत्।३-३-१६
क्रियातिपत्तिः, स्यत् स्यताम् स्यन्, स्यस् स्यतम् स्यत, स्यम्
स्याव स्याम। स्यत स्येताम् स्यन्त, स्यथास् स्येथाम् स्यध्वं,

स्ये स्यावहि स्यामहि, अभविष्यत्। २-३-७७ अदुरुपसर्गा-
न्तरो ण-हिनु-मीनाऽऽनेः रघुर्णः,अन्तर्भवाणि।२-३-८० अक-
खाद्यषान्ते पाठे वा अदुरुपसर्गान्तरो रघुर्नेर्णिः, प्रणिभवति
प्रनिभवति, पा पाने। ४-२-१०८ श्रौतिकृवुधिवुपाघ्राध्मा-
स्थाम्नादाम्दृश्यर्तिशदसदः शृकृधिपिबजिघ्रधमतिष्ठ-
मनयच्छपश्यच्छेशीयसीदं शिति, प्रकृतिग्रहणे यङ्लुबन्त-
स्यापि,परं-श्तिवा१शवा२ऽनुबंधेन३,निर्दिष्टं यद्ग्रहणेन४च।एकस्वर
निमित्तं ५च, पंचैतानि न यङ्लुपि ॥ १ ॥ पिबति, अदंतत्वान्न
गुणः, पिबेत् पिबतु अपिबत्,श्वादी पाऽर्त्ती। ४-४-५६ एकस्व-
रानुस्वारेतः स्ताद्यशितो नेट्--श्विश्रिडीशीयुरुक्षुक्ष्णुणुस्नुभ्यश्च
वृगो वृङः। ऊदृदंतयुजादिभ्यः, स्वरान्ता धातवोऽपरे ॥ १ ॥
पाठ एकस्वराः स्युर्येऽनुस्वारेत इमे स्मृताः। द्विविधोऽपि श-
किश्चैव, वचिर्विचिरिची पचिः ॥ २ ॥ सिंचतिर्मुचतिरतोऽपि
पृच्छतिर्भ्रस्जिमस्जिभ्रजयो युजिर्यजिः। त्यजिरंजिरुजयो निजि-
विंजुसंजिभंजिभजयः सृजित्यजी ॥ ३ ॥ स्कंदिविद्यविद्लविच्यो
नुदिः,स्विद्यतिः शदिसदी भिदिच्छिदी। तुद्यदी पदिहदी खिदि-
क्षुदी, राधिसाधिसुधयो युधिव्यधी ॥४॥ बंधिबुध्यरुधयः क्रुधि-
क्षुधी, सिध्यतिस्तदनु हन्तिमन्यती। आपिना तपिशिपिक्षिपि-
च्छुपो, लुंपतिः सृपिलिपी वपिस्वपी ॥ ५ ॥ यभिरभिलभियमि-
रमिनमिगमयः, क्रुशिरिशिरुशिलिशिदिशतिदशतयः। स्पृ-
शिमृशतिर्विशतिदृशिशिश्लक्षुषयस्त्विषिपिषिविष्लृकृपितुपिदुपिपु-
पयः ॥ ६ ॥ श्लिष्यतिर्द्विपिरतो घसिवसती, रोहतिर्लुहिरिही
अनिड् गदितौ। देग्धिदोग्धिलिहयो मिहिवहती, नह्यतिर्दहिरिति
स्फुटमनिटः ॥ ७ ॥ लुहरुहौ हिंसार्थौ सौत्रौ सेटावपि, श्वाश्रिपि
वृध्, पान्ते विपिपुपिश्लिषय एवेति। अपात्। ४-२-९२ सिज्विदो-
ऽभुवः अनः पुस्, भूवर्जनाल्लोपेऽपि। ४-३-९४ इडेत्पुसि चातो
लुक्, चात् क्ङिति अशिति स्वरे, अपुः। ४-१-३९ ह्रस्वः पूर्वस्य।
४-२-१२० आतो णव औः, पपौ। ४-३-२१ इन्ध्यसंयोगा-

त्परोक्षा किद्वत् अवित्, पपतुः पपुः। ४-४-७९ सृजिदृशिस्कृ-स्वरात्वतस्तृज्नित्यानिटस्थवः आदिरिड् वा अस्लादेः, पपिथ पपाथ पपिव। ४-३-९६ गापास्थासादामाहाकः क्लित्याशिष्येः, पेयात्। घ्रा गन्धोपादाने, जिघ्रति। ४-३-९६ ध्वेघ्राशाच्छासो वा सिचो लुप् परस्मै न चेट्, अघ्रात्। ४-४-८६ यमिरमिनम्यातः सोऽन्तश्च परस्मै सिच आदिरिट्।४-३-६५ सः सिजस्तेर्दिस्योरीत्। ४-३-७१ इट ईति सिचो लुक्, अघ्रासीत् अघ्रासिष्टाम्। ४-१-४४ व्यंजनस्यानादेर्लुक्। ४-१-४० गहोर्जः पूर्वस्य, जघ्रौ। ४-३-९५ संयोगादेर्वाऽशिष्येः आतः, घ्रेयात् घ्रायात्। ध्मा शब्दाग्निसंयोगयोः, धमति अध्मासीत्। ष्ठा गतिनिवृत्तौ, तिष्ठति। २-३-९८ षः सोऽष्ट्यैष्ठिवष्वष्कः पाठे धात्वादेः, स्वरदन्त्यपराः षोपदेशाः स्मिस्विदिस्वदिस्वंजिस्वपयश्च सृपिसृजिस्तृस्तृस्त्यासेकृसृवर्जम्, अस्थात्। ४-१-४५ अघोषे शिटः लुक् पूर्वस्य, तस्थौ। २-३-४० स्थासेनिसेधसिचसंजां द्वित्वेऽपि अटि सः षः, प्रत्यष्ठात् प्रतितष्ठौ। म्ना अभ्यासे, मनति मम्नौ। दाम् दाने, यच्छति। २-३-७९ नेर्ङ्मादापतपदनदगदवपीवहीशमूचिग्यातिवातिद्रातिप्सातिस्यति--हन्तिदेग्धौ अदुरुपसर्गान्तरो रषुर्णः, स्वाङ्गमव्यवधायीति प्रण्यच्छत्, अधर्म्यसंप्रदाने आत्मनेपदं, दास्या संप्रयच्छते, अदात् ददौ। जि ज्रि अभिभवे, जिज् इति, जयति। ४-३-४४ सिचि परस्मै समानस्याङिति वृद्धिः, अजैषीत्। ४-१-३५ जेर्गिः सन्परोक्षयोः। ४-३-५१ नामिनोऽकलिहलेर्वृद्धिर्ङ्णिति, जिगाय, उपान्त्याद्वृद्धया सिद्धेर्नामार्थं च, 'योऽनेकस्वरस्ये'ति जिग्यतुः। ४-३-५८ णिद् वाऽन्त्यो णव्,जिगय जिगाय 'दीर्घ'इति जीयात्। क्षि क्षये, ऐश्वर्येऽपि। ४-१-४६ कङश्चञ् पूर्वस्य, चिक्षाय। इ दु द्रु श्रु स्रु गतौ(ज्ञानप्राप्तिव्याप्त्यर्थे) अयति। ४-४-३१ स्वरादेस्तासु अद्यतन्यादिषु वृद्धिः, आयत् ऐषीत्।४-१-३७ पूर्वस्यास्वे स्वरे य्वोरियुव्, इयाय ईयतुः। ३-४-५८ णिश्रिद्रुस्रुकमः कर्त्तरि

ङोऽद्यतन्यां, अदुद्रुवत् दुद्रोथ । ध्रु स्थैर्ये च । सु प्रसवैश्वर्ययोः,
गतावपि सुरापिच, सुसाव । स्मृ चिंतायां, अस्मार्षीत् । ४-१-३८
ऋतोऽत् पूर्वस्य, सस्मार । ४-३-९ संयोगादृदर्तेः परोक्षायां
गुणः, सस्मरतुः। ४-४-७९ ऋतः तृज्नित्यानिटस्थव इण् न, स-
स्मर्थ। ४-३-१० क्ययङाशीर्ये गुणः संयोगादृदर्तेः, स्मर्यात्।
४-४-४९ हन्नृतः स्यस्य इडादिः, स्मरिष्यति । गृ घृ सेचने ।
औस्वृ शब्दोपतापयोः, अस्वार्ष्टाम्। ४-४-३८ धूगौदितः स्ताद्य-
शित आदिरिड् वा, चायिस्फायिप्यायीनां परोक्षायामपिच सर्वेषामि-
त्यपि, अस्वारिष्टाम् सस्वरिथ स्वरिता स्वर्ता। दृवृ वरणे ( स्थ-
गने )। ध्वृ ह्वृ कौटिल्ये ।सृ गतौ। ४-२-१०७ वेगे सर्त्तेर्धाव्
अत्यादौ शिति, धावति। ३-४-६१ सर्त्यर्तेर्वाऽद्यतन्यां अङ्,
अर्तेर्नात्मने नित्यं परस्मै सर्तेर्नाङ् चेति। ४-३-७ ऋवर्णदृशोऽङि
गुणः, असरत्, ससर्थ । ४-३-११० रिः शक्याशीर्ये ऋतः,
स्रियात्, धातोः क्ये रिरेव रीस्त्वधातोः । ऋ प्रापणे च, ऋच्छति

आरत् आर्षीत्। ४-१-६८ अस्यादेराः परोक्षायां, आरतुः
। ४-४-८०ऋवृव्येऽदः थव आदिरिट्,आरिथ। तॄ प्लवनतरणयोः,
४-३-८ स्कृच्छृतोऽकि परोक्षायां गुणः।४-१-२५ तॄत्रपफल-
भजां अत एर्न च द्विः अवित्परोक्षासेट्थवोः, तेरतुः, बहुत्वा-
त्फलत्रिफलौ । ४-४-११६ ऋतां क्ङितीर्, बहुत्वाल्लाक्षणिकस्य,
भ्वादेरिति। श्रौतानुमितयोः श्रौतो विधिर्बलीयानिति 'ऋता'मिति
ऋकाराणां नत्वनेकवर्ण इति तदन्तधातोः, तीर्यात् । ४-४-३५
वृतो नवाऽनाशीःसिच्परस्मै च इटो दीर्घः, परोक्षायामपि
चान्न, तरिता तरीता। ट्धे पाने।४-२-१आत्संध्यक्षरस्य।४-२-२
न शिति आत्, प्रण्याधात् 'पदेऽन्तरे' त्यत्राङो वर्जनादध्यपि,
अधासीत्। ३-४-५९ ट्धेश्वेर्वा ङोऽद्यतन्यां, अदधत् दधौ
धेयात्, गामादाग्रहणेष्वविशेष इति न लक्षणेति अदाद्येति कृत्रिमे-
ति च । दैव् शोधने, ऐकारोपदेशान्नामिकार्यं गुणो न, अत एव
अनवर्णा नामीत्यत्र वचनभेदः, दायात्। ध्यै चिंतायां, ध्यायात्

ध्येयात् । ग्लै हर्षक्षये (धात्वपचये)। म्लै गात्रविनामे (तनुकान्तिक्षये)। ध्यै न्यङ्करणे (कुत्सिताङ्गे)। द्रै स्वप्ने। ध्रै तृप्तौ। कै गै रै शब्दे। ष्टै स्त्यै संघाते च, ष्ट्यायति। खै खदने (हिंसा स्थैर्ये च)। क्षै जै सै क्षये, सेयात्, सायादपि। स्रै श्रै पाके। पै ओवै शोषणे, पेयात्, पायादपि, वायति। ष्ण वेष्टने। फक्क नीचैर्गतौ (मन्दगतिरसद्व्यवहारो वा)। तक हसने, सहनेऽपि। ४-३-४७ व्यंजनादेर्वोपान्त्यस्यातः सिचि परस्मै वृद्धिः, अताकीत् अतकीत्। ४-३-५० ञ्णिति उपान्त्यस्यातो वृद्धिः, तताक। ४-१-२४ अनादेशादेरकव्यंजनमध्येऽतः अवित्परोक्षासेट्थवोरेनेच द्विः, तेकतुः। तकु कृच्छ्रजीवने। ४-४-९८ उदितः स्वरान्नोऽन्तः, ततंक। ४-२ ४५ नो व्यंजनस्यानुदितः लुक् उपान्त्यस्य क्ङिति, तङ्क्यात्। शुक गतौ। ४-३-४ लघोरुपान्त्यस्य गुणः, विसर्गानुस्वारसंयोगपरो दीर्घश्च गुरुः, शोकति। वुक्क भाषणे, भषणेऽपि (भर्त्सनं)। उखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः। शाखृ श्लाखृ व्याप्तौ। कक्ख हसने, कखोऽपि। उख नख णख वख मख रख लख मखु रखु लखु रिखु इख इखु ईखु वल्गु रगु लगु (गतिवैकल्ये रूढः) तगु श्रगु श्लगु अगु वगु (गतिवैकल्ये रूढः) मगु स्वगु इगु उगु रिगु लिगु गतौ। ३-४-४८ गुरुनाम्यादेरनृच्छूर्णोः परोक्षाया आम् कृभ्वस्ति तदन्तं चानु, उपसर्गो न व्यवधायी इंखांप्रचकार, स्क्रिति इंखांचक्रतुः इंखामास इंखांबभूव। २-३-९७ पाठे धात्वादेर्णो नः, सर्वे नादयो णोपदेशा नृतिनन्दिनर्दिनक्षिनाटिनॄनाथृनाधृवर्जं, नेखतुः, आदेशोऽनिमित्तः। ४-१-६९ अनातो नश्चान्तः ऋदाद्यशौसंयोगस्य परोक्षायां, चादस्यादेराः, आनंग। ४-२-४७ लंगिकंप्योरुपतापांगविकृत्योः क्ङिति उपान्त्यनलुक्, लग्यात्, अन्यत्र लंग्यात्। त्वगु कंपने च। युगु जुगु दुगु वर्जने। गग्घ हसने, वग्घोऽपि। दघु पालने, वर्जनेऽपि। शिघु आघ्राणे। मघु मंडने। लघु शोषणे। शुच शोके। कुच् शब्दे तारे,

शब्दमात्रेऽपि। क्रुंच गतौ, क्रुच्यात्। कुंच च कौटिल्याल्पीभावयोः। लुंच अपनयने। अर्च पूजायां। अंचू गतौ च, अच्यात्, पूजायामंच्यात्। वंचू चंचू तंचू त्वंचू मंचू म्रुंचू म्रुचू म्लुचू ग्लुचू ग्लुंचू षश्च गतौ। ३-४-६५ ऋदिच्छ्विस्तंभूम्रुचूम्लुचूग्रुचूग्लुचूग्लुंचूज्रो वाऽद्यतन्यां परस्मै अङ्, अम्रुचत्, अम्रोचीत्, विधानाद्ग्लुंचद् इति। ग्रुचू ग्लुचू स्तेये, गतावपि। म्लेच्छ अव्यक्तायां वाचि। लछु लाछु लक्षणे। वाछु इच्छायां। आछु आयामे, आञ्छ, आनञ्छापि। ह्रीच्छ लज्जायां। हूर्च्छा कौटिल्ये। मूर्च्छा मोहसमुच्छ्राययोः। स्फूर्च्छा स्मूर्छा विस्मृतौ। युच्छ प्रमादे। धृज धृजु ध्वज ध्वजु ध्रज ध्रजु वज व्रज षस्ज गतौ, धिजोऽपि। ४-१-३० न शसदद्विवादिगुणिनः अत एः, ववजतुः। ४-३-४८ वदव्रजलः सेटि सिचि वृद्धिः, अव्राजीत्, आत्मनेपदमनित्यमिति सज्जन्ते गुणकर्मसु। अज क्षेपणे च। ४ ४-२ अघञ्क्यबलच्यजेर्वीः अशिति, अवैषीत् विवाय, अयि व्यंजनेऽने च वेति। कुजू खुजू स्तेये।

अर्ज सर्ज अर्जने। कर्ज व्यथने। खर्ज मार्जने च। खज मन्थे। खजू गतिवैकल्ये। एजृ कंपने। ट्वो स्फूर्जा वज्रनिर्घोषे, दीर्घनिर्देशात्कुर्दते। क्षीज कूज गुज गुजू अव्यक्ते शब्दे। लज लजु तर्ज भर्त्सने। लाज लाजु भर्जने च। जज जजु युद्धे। तुज हिंसायां। तुजु वलने च, पालनेऽपि। गर्ज गजु गृज गृजु मुज मुजु मृज मृजु मज शब्दे, बहुलवचनाच्चुरादावपि गर्जे। गज मदने च। त्यज हानौ त्यक्ष्यति। ४-३-४५ व्यंजनानामनिटि सिचि वृद्धिः परस्मै, अत्याक्षीत्। ४-३-७० धुड्ह्रस्वाल्लुगनिटस्तथोः सिचः, पुनस्तथोः व्याप्त्यर्थं, अत्याक्तां। षंज संगे। ४-२-४९ दंशसंजः शवि नलुक्, सजति, नित्यान्त्वर्थे न तुदादौ। कटे वर्षावरणयोः। ४-३-४९ न श्विजागृशसक्षणह्म्येदितः सेट्सिचि वृद्धिः, अकटीत्, वान्तश्वसिति। शट रुजाविशरणगत्यवसादनेषु। वट वेष्टने। किट खिट उत्त्रासे। शिट पिट अनादरे। जट झट संघाते। पिट शब्दे च, पेडोऽपि।

भट भृतौ ( वेतनं-भरणं )। तट उच्छ्राये। खट कांक्षे। णट नृत्तौ, हिंसायां नतावपि नतेऽपि। हट दीप्तौ। षट अवयवे। लुट विलोटने, विलोडनेऽपि। चिट प्रैष्ये ( दासत्वं )। विटशब्दे, आक्रोशेऽपि। हेट विबाधायां, हेडोऽपि। अट पट इट किट कट कट्ड कटै गतौ। कुट्ड वैकल्ये, कुडुरपि। मुट प्रमर्दने, मुडुरपि। चुट चुट्ड अल्पीभावे। वट्ड विभाजने। रुट्ड लुट्ड स्तेये, रुठलुठावपि। स्फट स्फुट्ट विशरणे, स्फटुरपि। लट बाल्ये। रट रठ च परिभाषणे। पठ व्यक्तायां वाचि। वठ स्थौल्ये। मठ मदनिवासयोश्च। कठ कृच्छ्रजीवने। हठ बलात्कारे, प्लवनकीलबंधनयोरपि। उठ रुठ लुठ उपघाते। पिठ हिंसासंक्लेशयोः। शठ कैतवे च। शुठ गतिप्रतिघाते। कुठु लुठु आलस्ये च, लुठिरपि। शुठु शोषणे अठ रुठु गतौ। पुड्ड प्रमर्दने। मुड्ड खंडने च। मड्ड भूषायां। गड्ड वदनैकदेशे ( गण्ड गजसंहननक्रियायां ) शौडृ गर्वे। योडृ संबधे। मेडृ म्रेडृ म्लेडृ लोडृ लौडृ उन्मादे, शौडाद्याष्ठान्ता अपि। रोडृ रौडृ तौडृ अनादरे। क्रीडृ विहारे। तुडृ तूडृ जौडृ तोडने (दारणं) तुड्अपि। हुडृ हूडृ हूरूडृ हौडृ गतौ। खोडृ प्रतिघाते, गतेरिति वर्तते। विड आक्रोशे। अड उद्यमे। लड विलासे। कड्ड मदे। कड्ड कार्कश्ये, दोपान्त्यः। अड्ड अभियोगे। चुड्ड हावकरणे ( भावसूचनं ) डोपान्त्य इति, त्रिष्वपि। अण रण वण व्रण बण भण भ्रण मण धण ध्वण भ्रण कण क्वण चण शब्दे ( शब्दक्रिया )। ओणृ अपनयने। शोणृ वर्णगत्योः। श्रोणृ श्लोणृ संघाते। पैणृ गतिप्रेरणश्लेषणेषु। चितै संज्ञाने। अत सातत्यगमने। चुतृ श्चुतृ श्च्युतृ क्षरणे, घृतं श्चोतति घृतक्, अस्कुलकीति प्रायिकं, अचुतत् अचोतीत्। च्युतृ आसेचने ( ईषत्सेकः )। जुतृ भासने। अतु बंधने, इतुरपि। कित निवासे, अनेकार्थत्वात्। ३-४-६ कितः संशयप्रतीकारे सन्। ४-१-३ सन्यङश्च द्विर्धातोरेकस्वरोऽशः, चः परोक्षाङसन्यङोऽनुवृत्त्यर्थः। ४-४-६० स्वार्थे सनो नेट्, चिकित्सति विग्रहविनाशयोः। ऋत घृणागतिस्पर्धेषु। ३-४-३

ऋतेर्डीयः, अशवि वा, ऋतीयते । ३-४-४६ धातोरनेकस्वरा-
दाम्परोक्षायाः कृभ्वस्ति चानु तदन्तं । ३-३-७५ आमः
कृगः प्राग्वदात्, ऋतीयांचक्रे आनर्त । कुथु पुथु लुथु मथु मन्थ
मान्थ हिंसासंक्लेशयोः । खादृ भक्षणे । बद स्थैर्ये, वदोऽपि ।
खद हिंसायां च । गद व्यक्तायां वाचि । रद विलेखने (उत्पाटनं)
णद ञिक्ष्विदा अव्यक्ते शब्दे, शब्दमात्रेऽपि, क्ष्विदा क्ष्विडोऽपि च ।
अर्द गतियाचनयोः, यातनायामपि । नर्द णर्द गर्द शब्दे । तर्द
हिंसायां । कर्द कुत्सिते शब्दे । खर्द दशने । अदु बन्धने । इदु
परमैश्वर्ये । बिदु अवयवे । णिदु कुत्सायां । ड्डनदु समृद्धौ ।
चदु दीप्त्याह्लादनयोः । त्रदु चेष्टायां । कदु क्रदु क्लदु रोदना-
ह्वानयोः । क्लिदु परिदेवने । स्कंदृ गतिशोषणयोः, व्यंजनाना-
मित्यस्कान्त्सीत् अस्कदत् । षिधू गत्यां । २ ३-६१ गतौ सेधो
न षः, न्यसेधत् सिषेध । षिधौ शास्त्रमांगल्ययोः । २-१-७९
अधश्चतुर्थात्तथोर्धः, यङ्लुब्यपि, लोपात्स्वरादेशः असैद्धाम् ।

शुंध शुद्धौ । स्तन धन ध्वन चन स्वन वन शब्दे । २-३-४३
व्यवात्स्वनोऽशने द्वित्वेऽप्यपि षः, अवाष्वणत् । ४-१-२६
जॄभ्रमवमत्रसफणस्यमस्वनराजभ्राजभ्रासभ्लासो वा एः
न च द्विः अवित्परोक्षासेट्थवोः, स्वेनतुः सस्वनतुः, न वमेरिति ।
वन षन भक्तौ ( भजनं )। कनै दीप्तिकान्ति (शोभा) गतिषु । गुपौ
रक्षणे । ३-४-१गुपौधूपविच्छिपणिपनेरायः,गोपायति। ३-४-४
अशवि ते वा, आयणिङीयाः । ४-३-८२ अतः लुगाशिति,
गोपाय्यात् । तप धूप संतापे । २-३-३५ निसस्तपेऽना-
सेवायां ति षः, निष्टपति तताप । रप लप जल्प व्यक्ते वचने ।
जप मानसे च । चप सान्त्वने । षप समवाये, षचोऽपि । सृप्लृ गतौ ।
४-४-११२स्पृशादिसृपो वाऽकिति धुटि अदन्तःस्वरात्,(स्पृश-
मृशकृषतृपदृपाम्) सर्प्ता स्रप्ता । ३-४-६४ लृदिद्द्युतादिपुष्यादेः
परस्मै अद्यतन्यामङ्, असृपत् । चुप मंदायां, गतेरनुवृत्तिः ।
तुप तुंप त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुंफ हिंसायां । ४-४-९७

प्रांत्तुंपतेर्गवि स्सडादि हिंसार्थे कच्प्रत्यये कपि तुम्पतिशब्दे इति च प्रस्तुंपति । तुपतुम्पतुफतुम्फास्तुदादावपि । वर्फ रफ रफु अर्व खर्व कर्व गर्व चर्व तर्व नर्व पर्व बर्व शर्व षर्व सर्व रिबु रबु गतौ, फान्ता हिंसायामपि अन्बोऽपि । कुबु आच्छादने । लुबु तुबु अर्दने । चुबु वक्त्रसंयोगे । स्रभू स्रंभू स्रिभू षिंभू भर्भ हिंसायां । शुंभ भाषणे च, भासनेऽपि बुम्भोऽपि च । यभ जभ मैथुने। ४-४-१०० जभः स्वरे नोऽन्तः स्वरात्, जंभति, यब्धा । चमू छमू जमू जिमू झमू अदने । ४-२-११० ष्ठिवूक्लम्वाचमः दीर्घः शित्यत्यादौ, आचामति । क्रमू पादविक्षेपे । ३-४-७३ भ्रासभ्लासभ्रमक्रमक्लमत्रासित्रुटिलषियासिसंयसेर्वा श्यः शिति। ४-२-१०९ क्रमो दीर्घः परस्मै शित्यत्यादौ, क्राम्यति क्रामति; सर्वेभ्यो लोप इति लोपे विषयसप्तम्या क्राम। ३-३-४७ क्रमोऽनुपसर्गाद् वाऽऽत्मने,क्रमते। ४-४-५३ क्रमः स्ताद्यशित इडादिः नात्मने, क्रान्ता क्रमिता अक्रमीत् । यमू उपरमे, यमपि । ४-२-१०६ गमिषद्यमश्छः शिति, यच्छति । स्यमू शब्दे स्येमतुः सस्यमतुः। णम प्रह्वत्वे (नम्रत्वं)।षम ष्टम वैक्लव्ये (कातरत्वं), स्तनध्वनस्वनस्यमूषमष्टमा अदन्ता अपि । अम शब्दभक्त्योः । अम द्रम हम्म मीमृ गम्लृ गतौ, गच्छति । ४-२-४४ गमहनजनखनघसः स्वरेऽनङि क्ङिति लुगुपान्त्यस्य, जग्मतुः । ४-४-५१ गमोऽनात्मने आदिरिट् सादेः,गमिष्यति, संभवेऽभावे वेति, तत्रावृत्तिः, प्रथमे वाऽनुवृत्तिः,द्वितीये च प्रकृतिविशेषणं, आत्मने नेति च । हय हर्य क्लान्तौ च । मव्य बंधने । सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः। शुच्यै चुच्यै अभिषवे (द्रवेणाद्रवाणां परिवासनं स्नानं च)। त्सर छद्मगतौ । क्मर हूर्च्छने । अभ्र वभ्र मभ्र गतौ । चर भक्षणे च, अचारीत् । धोर्ऋ गतेश्चातुर्ये । खोर्ऋ प्रतिघाते, गतेरनुवृत्तिः । दल त्रिफला विशरणे, घटादावप्याद्यः, फेलतुः अफालीत् । मील श्मील स्मील क्ष्मील निमेषणे ( संकोचः ) । पील प्रतिष्टंभे (रोपणं) । णील वर्णे । शील समाधौ (ऐकाग्र्यम्)।

कील बंधे। कूल आवरणे। शूल रुजायां। तूल निष्कर्षे(निर्यासः)। पूल संघाते। मूल प्रतिष्ठायां। फल निष्पत्तौ। फुल्ल विकसने। चुल्ल हावकरणे। चिल्ल शैथिल्ये च। पेल फेल शेल षेल सेल वेह्ल सल तिल तिल्ल पल्ल वेल्ल गतौ। वेल चेल केल क्वेल खेल स्खल चलने। खल संचये च। श्वल श्वल्ल आशुगतौ। गल चर्व अदने, स्रवणेऽपि बाहुल्याच्चर्वयति। पूर्व पर्व मर्व पूरणे। गर्व धिवु शव गतौ। कर्व खर्व गर्व दर्पे। ष्ठिवू क्षिवू निरसने, ष्ठीवति। ४-१-४३ तिर्वा ष्ठिवः पूर्वस्य, तिष्ठेव टिष्ठेव, क्षीवृरपि। जीव प्राणधारणे। पीव मीव तीव नीव स्थौल्ये। उर्वै तुर्वै थुर्वै दुर्वै धुर्वै जुर्वै अर्व भर्व शर्व हिंसायां। मूर्वै मव बंधने। गुर्वै उद्यमे। पिवु मिवु निवु सेचने। हिवु दिवु जिवु प्रीणने। इवु व्याप्तौ च, इन्वांचकार। अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमनप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिंगनहिंसाददहनभाववृद्धिषु। कश शब्दे, कषोऽपि। मिश मश रोषे च। शश प्लुतिगतौ। णिश समाधौ। दृशृ प्रेक्षणे, पश्यति अदर्शत्। ४-४-१११ अः सृजिदृशोऽकिति धुटि, दद्रष्ठ ददर्शिथ, किति नेति प्रसज्यनिषेधात् असृष्ट, न ङितीति। ३-४-५५ दृशिटो नाम्युपान्त्याद् दृशोऽनिटः सक्। २-१-६२ षढोः कस्सि परेऽसन्, अद्राक्षीत्। दंश दशने,दशति। घुषृ शब्दे। चूष पाने। तूष तुष्टौ। पुष वृद्धौ। लूष मूष स्तेये। घूष प्रसवे, सूषः सूषोऽपिच। ऊष रुजायां। ईर्ष उंछे (उच्चयनं)। कृष विलेखने (हलोत्कर्षणं) क्रष्टा कर्ष्टा। ३-४-५४ स्पृशमृशकृषतृपदृपो वाऽद्यतन्यां सिच्, अक्राक्षीत् अकार्क्षीत् अकृक्षत्। कष शिष जष झष वष मष मुष रुष रिष यूष जूष शष चष हिंसायां, अनिडपि शिष्। ४-४-४६ सहलुभेच्छरुषरिषस्तादेः इड् वादिः, रोषिता रोष्टा, तादौ आशिभृगस्तुशुविवस्तिभ्यो रुनुसुदुभ्योऽपरोक्षायां विपेर्मूलफलकर्मणि वा परोक्षायां वेडिति। वृषू संघाते च। भष भर्त्सने (कुत्सितशब्दकरणं)। जिषू विषू निषू मिषू पृषू वृषू सेचने। मृषू सहने च।

उषू श्रिषू श्लिषू प्रुषू प्लुषू दाहे। ३-७-४९ जागुषसमिन्धेर्नवा-ऽऽम्, ओषांचकार उवोष, नेन्धेरुपसर्गादाम् असमो वेति च। घृषू संघर्षणे। हृषू अलीके (हर्षे)। पुष पुष्टौ। भुष तसु अलंकारे। तुस हस ह्लस रस शब्दे। लस श्लेषणक्रीडनयो। घस्लृ अदने। २-३-३६ घस्वसः नाम्यादेः षः, जक्षतुः। ४-३-९२ सस्तः सि। अशिति, घत्स्यति, सूविषयत्वेन वर्णविधित्वेऽपि अवात्ताम्, स्स्थानिवद्भावो वृद्धिश्च। हसे हसने, अहसीत्। पिसृ पेसृ वेसृ गतौ, नाऽऽद्य ऋदित्, चौरादिकणिज्विकल्पेन सिद्धौ पाठ आत्मनेपदार्थ इत्यपि। शसू हिंसायां, शशसतुः अशसीत्। शंसू स्तुतौ च। जर्त्से परिभाषणहिंसातर्जनेषु। मिह सेचने। दह भस्मीकरणे, धक्ष्यति। चह कल्कने (शाठ्यं)। रह त्यागे। रहु गतौ। दृह दृहु बृह वृद्धौ। बृहू बृहु शब्दे च। उहृ तुहृ दुहृ अर्दने (पीडा)। अर्ह मह पूजायां, सौत्रोऽर्घः। उक्ष सेचने। रक्ष पालने। मक्ष मुक्ष संघाते। अक्षौ व्याप्तौ च। ३-४-७६ वाऽक्षः शिति श्नुः। ४-३-२

उश्नोः गुणोऽक्ङिति, अक्ष्णोति अक्षति अक्ष्णुवंति, अक्ष्णुहि। तक्षौ त्वक्षौ तनूकरणे। ३-४-७७ तक्षः स्वार्थे वा श्नुः शिति, तक्ष्णोति काष्ठं, तक्षति। णिक्ष चुंबने, णिक्षणिसनिन्दामकृतोऽपि वा ण इति प्रणिक्षति प्रनिक्षति इति। तृक्ष स्तृक्ष णक्ष गतौ, स्तृषेऽपि। वक्ष रोषे, संघातेऽपि। त्वक्ष त्वचने। सूर्क्ष अनादरे, सूर्क्ष्योऽपि। काक्षु वाक्षु माक्षु कांक्षायां। द्राक्षु ध्राक्षु ध्वाक्षु घोरवासिते च॥ इति परस्मैपदिनः॥

गाङ् गतौ, गाते अंतरंगत्वाद्गाते। ४-२-११४ अनतोऽन्तोऽदात्मने, गाते अगासत। ष्मिङ् ईषद्धसने, स्मयते। ४-२-१२१ आतामातेआथामाथे आदिः आतः, स्मयेते, नित्यत्वाद् गुणे अस्मेष्ट। ४-३-७२ सो धि वा लुक्, अस्मेध्वं, सिज्वृत्तौ सग्रहणात्प्रकृतिसोऽपि नवा नित्यं सिच इतिच। डीङ् विहायसा गतौ, अडयिष्ट, न धातुर्ह्रस्वान्तः। २-१-८० नाम्यंतात्परोक्षाऽद्यतन्याशिषो धो ढः। २-१-८१ हान्तस्था-

ञ्जीङ्भ्यां वा, अडयिढ्वं अडयिध्वम् डिङ्ये। उ कु गु घु ङु ङ् शब्दे, वार्णात्प्राकृतमित्यूवे, गू पुरीषोत्सर्गेऽपि। च्यु ज्यु जु प्रु प्लुङ् गतौ, वेगे जुः सौत्रोऽपि, अच्योष्ट। रुङ् रेषणे च। पूङ् पवने। मूङ् बंधने। धृङ् अवध्वंसने, चुरादेराकृतिगणत्वाद्धारयति। ४-३-३६ ऋवर्णात् सिजाशिषौ अनिटौ किदात्मने, अधृत धृषीष्ट। मेङ् प्रतिदाने (प्रत्यर्पणम्)। दे त्रैङ् पालने। ४-३-४१ इश्च स्थादः आत्मनेपदे सिच् कित् च, दीङो न बहिरङ्गत्वात्, अदित आदिषाताम्। ४-१-३२ देर्दिगिः परोक्षायां न चायं द्विः, दिग्यिरे। श्यैङ् गतौ। प्यैङ् वृद्धौ। वक्कुङ् कौटिल्ये, गतावपि। मकुङ् मंडने। अकुङ् लक्षणे, गतावपि। शीकृङ् सेचने, गतावपि। लोकृङ् दर्शने। श्लोकृङ् संघाते। द्रेकृ ध्रेकृङ् शब्दोत्साहे (औद्धत्यं वृद्धिश्चोत्साहः)। रेकृ शकुङ् शंकायां। ककि लौल्ये। कुक वृकि आदाने। चकि तृप्तिप्रतिघातयोः। ककु श्वकु त्रकु श्रकु श्लकु ढौकृ त्रौकृ ष्वष्क वस्क मस्क तिक टिक टीकृ सेकृ स्रेकृ रघु लघुङ् गतौ, तिकिटिकी अपि-ऋदितौ, षेकृङपि, लघुङ् भोजननिवृत्तावपि ष्वष्कते। अघु वघुङ् गत्याक्षेपे (वेगः)। मघुङ् कैतवे च। राघृ लाघृङ् सामर्थ्ये। द्राघृङ् आयासे च, कदथनमायामो वा, द्राघिमाद्या अतोऽपि। श्लाघृङ् कत्थने (उत्कर्षणं)। लोचृङ् दर्शने। षचि सेचने, षचोऽपि। शचि व्यक्तायां वाचि। कचि बंधने। कचुङ् दीप्तौ च। श्वचि श्वचुङ् गतौ। वर्चि दीप्तौ। माचि मुचुङ् कल्कने (दम्भः क्वथनं च), कल्कने मुचिरपि। मचुङ् धारणोच्छ्रायपूजनेषु, दीप्तावपि। पचुङ् व्यक्तीकरणे, पचिरपि। ष्टुचि प्रसादे। एजृ भ्रेजृ भ्राजि दीप्तौ, एजांचक्रे एजामास एजांबभूव, भ्रेजे बभ्राजे। इजुङ् गतौ, वीज्यपि। ईजि कुत्सने च। ऋजि गतिस्थानार्जनोपार्जनेषु, रिजिरपि। ऋञ्जु भृजैङ् भर्जने (पाकप्रकारः)। तिजि क्षमानिशानयोः, (तीक्ष्णीकरणं)। ३-४-५ गुप्तिजो गर्हाक्षांतौ सन्, तितिक्षते, तेजते। घट्टि चलने। स्फुटि विकसने, स्फुडुङपि। चेष्टि चेष्टायां। गोष्ठि लोष्ठि

संघाते च । वेष्टि वेष्टने ( ग्रथनं लोटनं परिहाणिश्च )। अट्टि हिंसातिक्रमयोः, दोपान्त्यः । एठि हेठि विबाधायां । मट्ठ कठुङ् शोके । मुठुङ् पलायने । वठुङ् एकचर्यायां । अठु पठुङ् गतौ । हुडु पिडुङ् संघाते । शडुङ् रुजायां च । तडुङ् ताडने । कडुङ् मदे । खडुङ् मंथे । खुडुङ् गतिवैकल्ये, खुडुणपि । कुडुङ् दाहे । वडु मडुङ् वेष्टने, विभाजनेऽपि । भडुङ् परिभाषणे । मुडुङ् मार्जने ( शोधनं न्यग्भावश्च ) । तुडुङ् तोडने । भुडुङ् वरणे । चडुङ् कोपे । द्राडृ ध्राडृङ् विशरणे । शाडृङ् श्लाघायां । २.३-१०४ ऋफिडादीनां डश्च लः, चाद्रो लः, शालते । वाडृङ् आप्लाव्ये, वालते, । हेडृ होडृङ् अनादरे, हेलते । हिडुङ् गतौ च । घिणु घुणु घृणुङ् ग्रहणे । घुणि घूर्णि भ्रमणे । पणि व्यवहारस्तुत्योः, पणायति, व्यवहारे पणते इति । यतैङ् प्रयत्ने, येते । युतृ जुतृङ् भासने । विथृ वेथृङ् याचने । नाथृङ् उपतापैश्वर्याशीःषु च, याच्ञोपतापावथौं, शेषे द्योत्ये, साध्यत्वाद्धाऽर्थौ

। ३-३-३६ आशिषि नाथः कर्त्तर्यात्मनेपदं, नाथते नाथति, ङित्वादानश् सोपसर्गस्यार्थान्तरेऽप्यात् । श्रथुङ् शैथिल्ये, शश्रन्थे, अनौपदेशिकत्वेऽपि एत्वनलुकाविति । ग्रथुङ् कौटिल्ये । कत्थि श्लाघायां । स्विदुङ् श्वैत्ये, वदुङ् स्तुत्यभिवादनयोः, ववन्दे । भदुङ् सुखकल्याणयोः, प्रीतावपि । मदुङ् स्तुतिमोदमदस्वप्नगतिषु । स्पदुङ् किंचिच्चलने । क्लिदुङ् परिदेवने ( शोचने ), उभयत्र पाठात् फलवति कर्त्तरि परस्मै इतरथाऽपीतरत् । मुदि हर्षे । ददि दाने, ददते, धारणेऽपि । हदि पुरीषोत्सर्गे । ष्वदि स्वदि स्वादि आस्वादने । उर्दि मानक्रीडयोश्च । कुर्दि गुर्दि गुदि क्रीडायां, खुर्दिगुधिश्चापि । षूदि क्षरणे ( निरसनं ) । ह्रादि शब्दे, अव्यक्तेऽपि । ह्लादैङ् सुखे च । पर्दि कुत्सिते शब्दे ( पायुध्वनौ अशब्देऽधोवाते वा ) । स्कुदुङ् आप्रवणे । एधि वृद्धौ । स्पर्धि संघर्षे । गाधृङ् प्रतिष्ठा ( आस्पदं ) लिप्साग्रंथेषु । बाधृङ् रोटने ( प्रतिघातः ) । दधि धारणे ( दाने ) । बधि बन्धने । ३-४-७

शान्दान्मान्बधान् निशानार्जवविचार वैरूप्ये दीर्घश्चेतः, चात् स्वार्थे सन्। ४-१-५९ सन्यस्य पूर्वस्येः, बीभत्सते। नाधृङ् नाथृङ् वत्, णाधृङपि। पनि स्तुतौ, पनायति, स्वार्थिकः प्रकृतिवदि-ति मते पनायते, पेने। मानि पूजायां, मीमांसते, अन्यत्र मानते। तिपृ ष्टिपृ ष्टेपृङ् क्षरणे, आगमजमनित्यमिति तेप्ता। तेपृङ् कम्पने च। टुवेपृ केपृ गेपृ कपुङ् चलने, चकंपे चकपे। ग्लेपृङ् दैन्ये च, गतावपि। मेपृ रेपृ लेपृङ् गतौ। रेपृङ् शब्देऽपि, त्रेपृङपि। त्रपौपि लज्जायां, त्रेपे। गुपि गोपनकुत्सनयोः, जुगुप्सते, अन्यत्र गोपते। अबु रबुङ् शब्दे। लबुङ् अवस्रंसने च। कबृङ् वर्णे, काब्ये वान्तः। क्लीबृङ् अधाष्टर्ये। क्षीबृङ् मदे। शीभृ चीभृ शल्भि कत्थने। वल्भि भोजने। गल्भि धाष्टर्ये। रेभृ अभु रभु लभुङ् शब्दे। ष्टभु स्कभु ष्टुभुङ् स्तंभे, तस्तम्भे, टपरः षोऽपि। जभु जभै जृभुङ् गात्रविनामे। रभि राभस्ये (कार्योपक्रमः)। डुलभिष् प्राप्तौ। भामि क्रोधे। क्षमौषि सहने, चक्षमिषे चक्षंसे। कमूङ् कांतौ(अभिलाषे। ३-४-२ कमेर्णिङ्, कामयते। ४-१-२ आद्यों-ऽश एकस्वरः, परोक्षाङे द्विः, णिश्रीत्यादिना ङः। ४-२-३५ उपान्त्यस्यासमानलोपिशास्वृदितो ङे णौ ह्रस्वः, आशासोऽपि, स्थानिवद्भावपुंवद्भावैकशेषद्वन्द्वैकत्वदीर्घत्वान्यनित्यानीत्य-समानेति। ४-१-६३ असमानलोपे सन्वल्लघुनि ङे णौ इः। ४-१-६४ लघोर्दीर्घोऽस्वरादेः असमानलोपे ङे णौ पूर्वस्य। अचीकमत अचकमत चकमे। ४-३-८३ णेरनिटि अशिति लुक्। ४-३-८५ आमन्ताल्वाय्येत्नावय् णेः, कामयांचक्रे काम-यिषीष्ट कामयिता। अयि वयि पयि मयि नयि चयि रयि गतौ। २-३-१०० उपसर्गस्यायौ रो लः, पलायते। ३-४-४७ दयायास्कासः परोक्षाया आम् तदन्तं कृभ्वस्ति चानु, अयां-चक्रे। तयि णयि रक्षणे च। दयि दानगतिहिंसादहनेषु च। ऊयैङ् तंतुसंताने, ऊयते। पूयैङ् दुर्गंधिविशरणयोः। क्नूयैङ् शब्दोंदनयोः, दुर्गन्धेऽपि। क्ष्मायैङ् विधूनने। स्फायैङ् ओप्या-

यैङ् वृद्धौ। ४-१-९१ प्यायः पीः परोक्षायङोः, पिप्ये । ३-४-६७ दीपजनबुधिपूरितायिप्यायो वा ते जिच् तलुक् च, अप्यायि अप्यायिष्ट। तायृङ्-संतानपालनयोः(प्रबन्धे)। वलि वल्लि संवरणे। शालि चलने च। मलि मल्लि धारणे । भलि भाल्लि परिभापणहिंसादानेषु । कलि शब्दसंख्यानयोः, कलि अशब्दे शब्दे अव्यक्तेऽपिच। तेवृ देवृङ् देवने। पेवृ सेवृ केवृ खेवृ गेवृ ग्लेवृ प्लेवृ म्लेवृङ् सेवने। २-३-४६ परिनिवेः सेवः द्वित्वेऽट्यपि पः, निपिषेवे। रेवृ पवि गतौ, रेवृङ् प्लुतगतावपि। काशृ दीप्तौ। क्लेशि विबाधने। भापि च व्यक्तायां वाचि । ईपि गतिहिंसादर्शनेषु, इपिरपि। गेपृङ् अन्विच्छायां। येपृङ् प्रयत्ने। जेपृ णेपृ एपृ हेपृङ् गतौ। रेपृ हेपृङ् अव्यक्ते शब्दे। पर्षि स्नेहने। घुपुङ् कान्तीकरणे। संसृङ् प्रमादे (अवलेपः) भ्रान्तोऽपि। कासृङ् शब्दकुत्सायां (रोगः) कासांचक्रे। भासि टुभ्रासि टुम्लासृङ् दीप्तौ, भ्रेस बभ्रासे म्लास्यते म्लासते। रासृ णासृङ् शब्दे । णासि कौटिल्ये । भ्यासि भये, भेपृङपि। आशसुङ् इच्छायां। ग्रसू ग्लसूङ् अदने। घसूङ् करणे, घसुङपि। ईहि चेष्टायां। अहु प्लिहि गतौ । गर्हि गल्हि कुत्सने। वर्हि वल्हि प्राधान्ये। वर्हि बल्हि परिभापणहिंसाऽऽच्छादनेषु, दानेऽपि। वेहृ जेहृ वाहृङ् प्रयत्ने। द्राहृङ् निक्षेप, निद्राक्षेपेऽपि। ऊहि तर्के (उत्प्रेक्षा)।३-३-२५ उपसर्गादस्योहो वाऽऽत्मने, अकर्मकादिति। ४-३-१०६ उपसर्गादूहो ह्रस्वः क्ङिति ये, पर्युह्यात्, ऊ ऊहेति समौह्यत। गाहौङ् विलोडने। ग्लहौङ् ग्रहणे,ग्रहौङपि। वहु महुङ् वृद्धौ। दक्षि शैघ्र्ये च। धुक्षि धिक्षि संदीपनजीवनक्लेशनेषु। वृक्षि वरणे। शिक्षि विद्योपादाने, जिज्ञासायामात्मने परस्मायन्यथेति। भिक्षि याच्ञायां, अलाभे लाभेऽपिच। दीक्षि मौंड्येज्योपनयननियमव्रतादेशेषु। ईक्षि। दर्शने। इत्यात् श्रिग् सेवायां, अशिश्रियत् शिश्रिये । णीग् प्रापणे। हृग् हरणे, सकर्मकचौर्यार्थे। भृग् भरणे। धृग् धरणे, अविध्वंसने मा भूद् धरतीति धृङुक्तः, धारयत्यपि। डुकृग् करणे, सिचो लुग्-

विकल्पाभावाय न तनादौ, पाठाच्छ्व् च। ३-४-८३ कृग्तनादे-रुः शिति, करोति। ४-२-८९ अतः शित्युत् कृगोऽविति,कुरुते, विधानान्न गुण उपान्त्यस्य, उकारनिमित्तोऽकारस्ततस्तल्लोपे स्यादुः अडश्च न स्यात्, शित्युरिति व्यवहितेऽपि शिति। २-१-६६ कुरुच्छुरः न दीर्घः। ४-२-८८ कृगो यि च परस्योतो लुक्, चाद् वम्यविति, कुर्वः कुर्यात्। ३-३-७६ गंधना (दोषोद्घाटनं)ऽवक्षेपसेवासाहस (उत्साह) प्रतियत्न (गुणाधान) प्रकथनोपयोगे (धर्मादौ विनियोगः) कृग आत्मनेपदं, उत्कुरुते। ४-४-९१ संपरेः कृगः स्सट्। ४-४-९२ उपात् भूषासमवायप्रतियत्नविकारवाक्याध्याहारे। २-३-४८ असोङसिवुसहस्सटां परिनिवेः पः। २-३-४९ स्तुस्वञ्जश्चाटि नवा चादसोङित्यादेः, पर्यस्करोत् पर्यष्करोत् ३-३-८५ वेः कृगः शब्दे (कर्मणि) चानाशे, चादसाति, विकुर्वतेऽश्वाः। ३-३-७७ अधेः प्रसहने (पराभवः) तं हाधिचक्रे।

हिक्की अव्यक्ते शब्दे। अञ्चूग् गतौ च, अचूङपि। डुयाचृग् याच्ञायाम्, ट्विदपि। डुपचीष् पाके। राजृग् टुभ्राजी दीप्तौ, यजसृजेति षत्वमस्य राजेः साहचर्यात्, एत्वद्वित्वाभावविकल्पस्तु तस्येति प्राक्पाठः, आत्मनेपदानित्यत्वाय च, तेन लभसेवोः परस्मायपि। भजी सेवायां। रंजी रागे। ४-२-५० अकद्विनोश्च रञ्जेर्नो लुक्, चाच्छत्रि, रजति। ३-४-७४ कुषिरंजेर्व्याप्ये वा परस्मै च कर्त्तरि, चात् श्यः, रज्यति वस्त्रं स्वयं, अरांक्षीत्, न शाने, रजमानानि, नित्यान्तादेशाय श्यः। रेटृग् परिभाषणयाचनयोः। वेणृग् गतिज्ञानचिंतानिशामनवादित्रग्रहणेषु। चतेग् याचने। प्रोथृग् पर्याप्तौ। मिथृग् मेधाहिंसयोः। मेथृग् संगमे च। चदेग् याचने। ओबुन्दृग् निशामने, अबुन्दीत् अबुदत्, ऊबुन्धृग् ऊधेहृग् चापि। णिदृ णेदृग् कुत्सासंनिकर्षयोः। मिदृ मेदृग् मेधाहिंसयोः। मेधृग् संगमे च। शृधू मृधूग् उन्दे। बुधृग् बोधने, अनृदिदपि।

खनूग् अवदारणे, चख्ने खन्यात्, खायादपि। दानी अवखंडने, दीदांसते। शानी तेजने। शपी आक्रोशे। चायृग् पूजानिशामनयोः। व्ययी गतौ। अली भूषणपर्याप्तिवारणेषु। धावूग् गतिशुद्ध्योः। चीवृग् ऋषीवत्, अनृदिदपि। दाशृग् दाने। ऋषी आदानसंवरणयोः। भेषृग् भये। भ्रेषृग् चलने च। पषी बाधनस्पर्शनयोः (ग्रन्थनम्) स्पशीरपि। लषी कान्तौ (इच्छा), लष्यति लषति। चषी भक्षणे। छषी हिंसायां। त्विषी दीप्तौ, अवादाननिरसनयोश्चापि। असी अषी गत्यादानयोश्च। दासृग् दाने। माहृग् माने। गुहौग् संवरणे। ४-२-४२ गोहः स्वरे उपान्त्यस्योत्, निगूहति। ४-३-७५ स्वरेऽतः सक्संबंधिनो लुक्, अघुक्षातां अघुक्षत। ४-३-७४ दुहदिहलिहगुहो दंत्यात्मने वा सकः लुक्, अगुह्वहि अघुक्षावहि। गूहिता गूढा। म्लक्षी भक्षणे, भक्षीरपि। इत्युभयपदं॥

द्युति दीप्तौ। ३-३-४४ द्युद्भ्योऽद्यतन्यां वाऽऽत्मने, अद्युतत् अद्योतिष्ट। ४-१-४१ द्युतेरिः पूर्वस्य, दिद्युते। रुचि अभिप्रीत्यां च। घुटि परिवर्त्तने। रुटि लुटि लुठि प्रतिघाते, आद्यो दीप्तावपि। श्विताङ् वर्णे। ञिमिदाङ् स्नेहने, अमिदत् अमेदिष्ट। ञिक्ष्विदा ञिष्विदाङ् मोचने च, आनिटौ, आद्यो डान्तोऽपि च। शुभि दीप्तौ। क्षुभि संचलने। णभि तुभि हिंसायां, नभिरपि। स्रंभूग् विश्वासे, स्रंहूङपि। भ्रंशू स्रंसूङ् अवस्रंसने। ध्वंसूङ् गतौ च। वृतूङ् वर्तने। ३-३४५ वृद्भ्यः स्यसनोः वा कर्त्तर्यात्मनेपदं। ४-४-५५ न वृद्भ्यः परस्मै स्तादाशित इट्, स्यसनोरित्ति, वर्त्स्यति वर्तिष्यते। स्यंदौङ् प्रस्रवणे। २-३-५० निरभ्यनोश्च स्यंदस्याप्राणिनि कर्त्तरि षः, चात्परिनिवेः, विधेर्भिश्चेऽप्राणिविकल्पः, विष्यंदते विस्यन्देते वा मत्स्योदके। वृधूङ् वृद्धौ। शृधूङ् शब्दकुत्सायां (वायुशब्दे)। कृपौङ् सामर्थ्ये। २-३-९९ ऋर लृलं कृपोऽकृपीटादिषु, कल्पते चक्लृपे, ऋका-

रापदिष्टं लृकारस्यापीति ऋतोऽदित्यनेन लृतोऽत् । ३-३-४६ कृपः श्वस्तन्यां वाऽऽत्मने कर्त्तरि, कल्पितासे कल्प्तासि अक्लृपत् अकल्पिष्ट इति वृद्द्युतादिः

ज्वल दीप्तौ, अज्वालीत् । कुच संपर्चनकौटिल्यप्रतिष्टंभ(रोधनं)-विलेखनेषु । पत्लृ गतौ । ४-३-१०३ श्वयत्यसूवचपतःश्वास्थ-वोचपप्तं अङि, अपप्तत् । क्वथे निष्पाके । मथे विलोडने । षद्लृ विशरणगत्यवसादनेषु (खेदे) । २-३-४४ सदोऽप्रतेः परोक्षायां त्वादेः षः, निषीदति निषसाद । ५-२-१ श्रुसद्वस्भ्यः परोक्षा वा भूते, क्वसुरेव ह्यस्तनी चेति च, न ह्यस्तन्या बाधो बहुत्वात्, वावचनात् स्यादिष्वन्योऽन्यं नासरूपोत्सर्गविधिः। शद्लृ शातने । ३-३-४१ शदेः शिति कर्त्तर्यात्मनेपदं, शीयते अशदत् । बुध अवगमने, अनिडपि । टुवमू उद्गिरणे, वेमतुः ववमतुः । भ्रमु चलने, भ्रम्यति, शमेति श्ये दीर्घ इति, भ्रमति । क्षर संचलने । चल कंपने । जल घात्ये (जडत्वं) । जलण् अपवारणे । लोकात् टल ट्वल वैक्लव्ये । ष्ठल स्थाने, स्थलपि । हल विलेखने । णल गंधे । बल प्राणनधान्यावरोध (कुशूलं)योः, घटादिरपि । पुल महत्त्वे, तुदादिरपि । कुल बन्धुसंतानयोः । पल फल शल गतौ । हुल हिंसासंवरण-योश्च । कुश आह्वानरोदनयोः । कस गतौ । रुह जन्मनि, बीजजन्मन्यपि, अरुक्षत् । रमि क्रीडायां । ३-३-१०५ व्याङ्परे रमः परस्मै, आरमति । ३-३-१०६ वोपात्, अन्तर्भावितण्यर्थे सकर्मकः, परस्मै आत्मने एवेति च, अत्र यमूं रमूं चापि । षहि मर्षणे, पर्यषहत पर्यसहत सेहे । १-३-४३ सहिवहेरोच्चावर्णस्य चाड्ढस्तड्ढेऽनु लुक्, विसोढा । इति वृज्ज्वलादिः ॥

यजी देवपूजासंगतिकरणदानेषु । ४-१-७२ यजादिवशवचः सस्वरान्तस्था य्वृत् पूर्वस्य परोक्षायां, इयाज । ४-१-७९ यजादिवचः किति परस्यापि

य्वृत्, ईजतुः इयजिथ इयष्ठ इज्यात् । व्येग् संवरणे (आच्छादनं)। ४-१-७१ ज्याव्येव्यधिव्यचिव्यथेरिः पूर्वस्य विव्याय।४-२-३व्यस्थवणवि नात्वं,इत्वासिद्धत्वान्न भ्वादेरिति दीर्घः, विव्यतुः विव्यायिथ। वेग् तन्तुसंताने । ४-४-१९ वेर्वय् वा परोक्षायां, उवाय। ४-१-७४ वेरयः पूर्वस्य परस्य न य्वृद्, ववौ। ४-१-७५ अविति वा अयन्तस्य वेर्य्वृत्, ववतुः ववुः। ४-१-१०२ य्वृत् सकृत्,ऊवतुःऊवुः। ४-१७३ न वयो य् य्वृत्, ऊयतुः उवयिथ। ४-४-१२१ य्वोः प्यव्यंजने लुक्, उवथ। ह्वेग् स्पर्धाशब्दयोः। ४-१-८७ द्वित्वे ( विषये ) ह्वः य्वृत्, जुहाव जुहुवतुः। ३-४-६२ ह्वालिप्सिचः अद्यतन्यामङ्, आह्वत्। ३-४-६३ वाऽऽत्मनेऽङ् ह्वादेः, आह्वत आह्वास्त। टुवपी बीजतन्तुसंताने, उवाप ऊपतुः। वही प्रापणे, उवाह। ट्वोश्वि गतिवृद्धयोः। ४-१-९० वा परोक्षायङि श्वेर्य्वृत्, शुशाव शिश्वाय शूयात् अश्वत् आशिश्वियत् अश्वयीत्। वद व्यक्तायां वाचि, उवाद ऊदतुः। ३-३-७८ दीप्तिज्ञानयत्नविमत्युपसंभाषो(शान्ति)पमंत्रणे वदः कर्त्तरि आत्मने, वदते विद्वान् स्याद्वादे। ३-३-७९ व्यक्तवाचां सहोक्तौ, संप्रवदन्ते ग्राम्याः, शुकादीनामपि। ३-३-८० विवादे वा ( विमत्या विरुद्धाभिधानं ) विप्रवदन्ते विप्रवदन्ति वा ब्राह्मणाः। वस निवासे, उवास वत्स्यति। वृध्यजादिः।

घटिष् चेष्टायां। क्षजुङ् गत्यादानयोः। व्यथिष भयचलनयोः, दुःखेऽपि, विव्यथे। प्रथिष् प्रख्याने ( प्रसिद्धिः )। म्रदिष् मर्दने। स्खदिष् खदने ( विदारणं )। क्रदु कदु क्लदुङ् वैक्लव्ये, क्रंदते, षितोऽनुदितोऽपि। क्रपि कृपायां। ञित्वरिष् संभ्रमे ( आशुकारिता )। प्रसिष् विस्तारे, प्रसवेऽपि।

दक्षि हिंसागत्योः। श्रा पाके, श्राति। स्मृ आध्याने ( उत्कण्ठा ) ।दृ भये । नृ नये। ष्टक स्तक प्रतीघाते। चक तृप्तौ च। अक कुटिलायां गतौ । कखे हसने । अग अकवत् । रगे शंकायाम् । लगे संगे। ह्रगे ह्लगे सगे षगे ष्ठगे स्थगे संवरणे। वट भट परिभाषणे। णट नृत्तौ । गड सेचने । हेड वेष्टने । लड जिह्वोन्मंथने, जिह्वोन्मत्थनयोरपि । फण कण रण गतौ, न फणोऽत्रेति। चण हिंसादानयोश्च । श्रण श्रण दाने । स्नथ क्रथ क्नथ क्लथ हिंसार्थाः । छद ऊर्जने । मदै हर्षग्लपनयोः । ष्टन स्तन ध्वन शब्दे । स्वन अवतंसने । चन हिंसायां । ज्वर रोगे । चल कंपने । ह्मल ह्मल चलने । ज्वल दीप्तौ च , दलिवलिस्खलित्रपयोऽपि ॥ घटादिः उक्तार्थेषु, अन्येऽन्येष्वपि । इति भुवादयः ।

अथादादिः । अद प्सा भक्षणे, अत्ति। ४-२-८३ हुधुटो हेर्धिः,अद्धि।४-४-९० अदश्चाट्,चात् रुतपंचकात् शितोर्दिस्योः,रादि आदत् आदः। ४-४-१७घस्लृ सनद्यतनीघञचलि अदः,अघसत्। ४--४--१८ परोक्षायां नवाऽदो घस्लृ, जघास आद, असर्वविषयता घसेः, तेन घस्ता घस्मर इत्यादावेव सः । ४-२-९१ वा द्विषातोऽनः पुस् शितः, अप्सुः अप्सान् । भा दीप्तौ । या प्रापणे । वा गतिगंधनयोः । ष्णा शौचे । श्रा पाके ( स्वर्ब-पाके )। द्रा कुत्सितगतौ ( पलायनं स्वापश्च )। पा रक्षणे, पायात् अपासीत् । ला आदाने । रा दाने, आदानेऽपि । दाव् लवने, अदासीत्। ख्या प्रथने, प्रकथनेऽपि। ३-४-६० शास्त्यसूवक्तिख्यातेरङ् अद्यतन्यां, द्विर्बद्धं सुबद्धमिति पौपादेरसोऽङ्, आख्यत् । प्रा पूरणे, प्राणः गोष्पदप्रं चास्य । मा माने, प्रनिमाति, प्रणिमातीत्यपि । इक् स्मरणे। ४-३-१६ इको वा स्वरेऽविति शिति यः, अधियन्ति अधीयन्ति । ४-४-३० एत्यस्तेर्वृद्धिर्ह्यस्तन्याममाङा, आयन्, वचनात् वृद्धिस्तद्बाध्योऽड् च

यस्वाल्लुकः पश्चात्, तेनैयरुः। ४-४-२३ इणिकोर्गा अद्यतन्यां, अगात् । इण् गतौ ४-३-१५ ह्विणोरप्विति व्यौ स्वरे, यन्ति अगात् इयाय। २--१--५१ इणः इय् स्वरे, ईयतुः। ४-३--१०७ आशिषीणः उपसर्गात् क्ङिति यि ह्रस्वः, उदियात्, प्रति-यादपि ई इण इति समेयात्, इकोऽपि। वी प्रजन (प्रथमगर्भग्रहणं)-कान्त्यसनखादने च, विव्युः। द्यु अभिगमे ४-३-५९ उत और्विति व्यंजनेऽद्वेः धातोः, द्यौति द्युवन्ति, ङित्वं क्त्विेनेव पूर्व उत्तरेणेति तुवि द्युतात्। षु प्रसवेश्वर्ययोः, असौषीत्। तु वृत्तिहिंसापूरणेषु। ४-३-६४ यङ्तुरुस्तोर्बहुलं व्यंजनादौ विति परादिरीत्, आत्मनेपदेऽसंभवाद्यङ्लुब्, तौति तवीति । यु मिश्रणे, अभिश्रणेऽपि। णु स्तुतौ, अनावीत् । क्ष्णु तेजने । स्नु प्रस्रवणे । ४-४-५२ स्नोः अनात्मने स्ताद्यशित आदिरिट्, स्नविता । ट्वुक्षु रु कु शब्दे, अकौषीत्, कवातिरव्यक्ते कुवतिश्चार्ते। रुदृ अश्रुविमोचने । ४-४-८८ रुत्पंचकाच्छिदयः व्यंजनादेः आदिरिट्, रोदिति, हिव्यक्तेः रुदिहि। ४-४-८९ दिस्योरीट् रुत्पंचकात्, अरोदीत् अरुदत् । ञिष्वप् शये, स्वपिति सुष्वाप। ४-१-८०स्वपेर्यङ्ङे च य्वृत्, चात् क्किति, सुषुपतुः। २-३-५७ अवः स्वपः निर्दुःसुवेः षः, निःषुषुपतुः निःस्वपिति । अन श्वस प्राणने । २--३--८१ द्वित्वेऽप्यन्तेऽप्यानितेःपरेस्तु वा अदुरुपसर्गान्तरो रादेर्नो णः, प्राणिति पर्यणिति पर्यनिति,अश्वासीत् अश्वसीदिति । जक्ष भक्षहसनयोः जक्षिति जक्षितः। ४-२-९४अन्तो नो लुक् दुव्युक्तजक्षपंचतः शितोऽवितः,जक्षति।४--२--९३दुव्युक्तजक्षपंचतः शितोऽनः पुस्, अजक्षुः। दरिद्रा दुर्गतौ, दरिद्राति । ४-२-९७एषामीर्व्यंजनेऽदः श्नादुव्युक्तजक्षपंचकस्यातः शित्यविति। ४-२-९८ इर्द्रेरिद्रः शित्यविति व्यंजने, दरिद्रितः। ४-२-९६ श्नश्चातः श्नादुव्युक्त-

जक्षपंचकस्य लुक् शित्यविति, दरिद्रति दरिद्रियात्। ४-३-७६ दरिद्रोऽद्यतन्यां वा लुक्, अदरिद्रीत् अदरिद्रासीत् दरिद्रांचकार, परोक्षया निर्दिष्टत्वात् औवचनाच्च ददरिद्रौ। ४-३-७७ अशित्यस्सन्णकच्णकानटि दरिद्रो लुक्, दरिद्र्यात्। जागृ निद्राक्षये, अजागरीत्। ४-३-७८ व्यंजनादेः (लुक्) सश्च दः, अजागः, ईतः परादित्वात्सेतः। ४-३-५२ जागुर्ञिणवि वृद्धिः, जजागार जागरांचकार। ४-३-६ जागुः किति गुणः, जागर्यात्, कसौ गुणागुणाप्रयोगा इति। चकासृ दीप्तौ। ४-३ ७२ सो धि वा लुक्, चकाद्धि चकाधि अचकात्। ४-३ ७९ सेः लुग्, सृदुधां च रुर्वा व्यंजनांतात्, अचकाः अचकात्। शासु अनुशिष्टौ (नियोगः)। ४-४-११८ इसासः शासोऽङ्व्यंजने क्ङिति, शिष्टः शासति। ४-२-८४ शासस्हनः शाध्येधिजहि हिना, शाधि अशासुः अशिषत्। वच्च भाषणे, वचन्ति अवक् अवोचत् ऊचतुः, नान्तौ वचिरिति। मृजौ शुद्धौ। ४-३-४२ मृजोऽस्य वृद्धिः, मार्ष्टि। ४-३-४३ ऋतः स्वरे वा वृद्धिर्मृजः, मार्जन्ति मृजन्ति अमार्ट्, अष्टेति द्रमिलाः। सस्तु स्वप्ने। विद ज्ञाने। ४-२-११६ वेत्तेर्नवाऽऽत्मने अन्तो रत्। ३-३-८४ समो गमृच्छिप्रच्छिश्रुवित्स्वरत्यर्त्तिदृशः कर्मण्यसति आत्मने, संविद्रते संविदते। ४-२-११७ तिवां णवः परस्मै वेत्तेर्वा, वेद वेत्ति। ३-४-५२ पंचम्याःकृग् वाऽऽम् वेत्तेःकिच,विदांकरोतु वेत्तु। ३-४-५१ वेत्तेः कित् आम् वा, विदांचकार विवेद, किद्विधानान्नामः परोक्षान्वं,नच ततो द्वित्वादि,अवेद् अविदुः,अविदान्निति, अवेः अवेदिषुः। हन हिंसागत्योः। ४-२-५५ यमिरमिनमिगमिहनिमनिवनतितनादेर्धुटि क्ङिति लुक्, हतः घ्नंति। २-३-८२हनः अदुरुपसर्गांतरो रादेर्णः, प्रहण्ति। २-३-८३ वमि वा, प्रहण्मि प्रहन्मि। ४-३-१०१ ञिणवि घन् हनः, जघान

जघ्नतुः, घात्वारणाय। ४--४-२१ हनो वध आशिष्यञौ, वध्यात्। ४ ४-२२ अद्यतन्यां, वा त्वात्मने, अवधीत्, न वृद्धिरदन्तत्वात्। वश् कान्तौ (इच्छा), वष्टि। ४-१-८३ वशेरयङि क्ङिति य्वृत्, उष्टः उवाश ऊशतुः उश्यात्, वशिघसी छांदसावपि। अस् भुवि। ४-२-९० श्नास्त्योर्लुक् अतः शित्यविति, स्तः सन्ति। ४-३-७३ अस्तेः सि सलुक् ह्रस्त्वेति, असि। २--३--५८ प्रादुरुपसर्गाद्यस्वरेऽस्तेः षः, प्रादुष्ष्यात्, तातङः शित्त्वात् स्तात्, विषंतु, आसीत् आसन्। ४-४-१ अस्तिब्रुवोर्भूवचावशिति, अभूत् अभूवन् बभूव। षस स्वप्ने। यङ्लुप् अदादौ, ततो नात्मने, भावकर्मणोः यङ्लुब् छन्दस्येवेत्यपि च। इति परस्मै पदम् ॥

इङ् अध्ययने, अधीते अधीयाते। ४-४-२८ वाद्यतनीक्रियातिपत्त्योर्गीङ्, अध्यगीष्ट, अध्यैष्ट। ४--४--२६ गाः परोक्षायां, अधिजगे अध्यगीष्यत। शीङ् स्वप्ने। ४--३--१०४ शीङ एः शिति, शेते। ४--२--११५ शीङो रत् अन्तः, शेरते शेरतां। दीधीङ् दीप्तिदेवनयोः। वेवीङ् वीसमानार्थश्चापि। ह्नुङ् अपनयने (अपलापः)। षूङ् प्राणिगर्भविमोचने। ४--३--१३ सूतेः पंचम्यां न गुणः, सुवै। पृचैपृजु पिजुङ् संपर्चने, सृजैङ् पि।प्रजुङ् अव्यक्ते शब्दे, वेण चापि। वृजैङ् वर्जने। णिजुङ् विशुद्धौ। शिजुङ् अव्यक्ते शब्दे। ईडि स्तुतौ। ४--४--८७ ईशीडः सेध्वेस्वध्वमोः आदिरिट्, ईडिषे, ऐड्ढ्वं। ईरि गतिकंपनयोः, ईर्ते। ईशि ऐश्वर्ये, ईशिषे। वसि आच्छादने। आङ्शासूङ् इच्छायां, आशासिष्ट, अनूदिदपि। आसि उपवेशने। कसुङ् गतिशासनयोः। णिसुङ् चुंबने, निंस्ते। चक्षि व्यक्तायां वाचि, चष्टे। ४--४--४ चक्षो वाचि क्शांग्ख्यांगशिति, चक्शौ ख्यासीष्ट, विचक्षणादिरन्यस्य। इत्यात्म-

नेपदं। ऊर्णुग् अच्छादने। ४-३-६० वोर्णोः व्यंजनादौ विति औरद्वेः, ऊर्णोति ऊर्णौति। ४--३--६१ न द्विस्योः, और्णोत् ।४-१-४ स्वरादेर्द्वितीय एकस्वरोऽशो द्विः। ४-१-५ न बदनं संयोगादि द्विः। ४-१-६ अयि रः, ऊर्णुनाव, अन्विति न उर्णुन्नाव, निमित्ताभावे नैमित्तिकाभाव इति त्वनित्यः।४-३-१९ वोर्णोः इड् ङिद्वत्, उर्णुनाविथ उर्णुनुविथ। ४-३-४६ वोर्णुगः सेटि सिचि वृद्धिः, और्णावीत् और्णवीत् और्णुवीत्। ष्टुग् स्तुतौ। स्तौति स्तवीत। २-३-३९ उपसर्गात् सुग्सुवसो-स्तुस्तुभोऽद्यप्याद्वित्वे पः, अभ्यष्टौत् पर्यष्टौत् पर्यस्तौत् ।४-४८५ धुग्सुस्तोः परस्मै सिच आदिरिट्, अस्तावीत् तुष्टोथ। ब्रूग् व्यक्तायां वाचि। ४--२--११८ ब्रूगः पंचानां तिवां णवः पंचाहश्च, आह आत्थ। ४-३-६३ ब्रूतः परादिः व्यंजनादौ वितीत्, ब्रवीति अवोचत् उवाच वक्ष्ये। द्विषी अप्रीतौ, अद्विषुः अद्विषन् अद्विक्षन्। दुही क्षरणे, धोक्ष्यति। दिही लेपे। लिहि आस्वादने, लेढि। इत्युभयपदं

हु दाना (हविःप्रक्षेपः) दनयोः। ४-१-१२ हवः शिति द्विः, जुहोति जुह्वति जुहुधि, प्रकृत्यनपेक्षणादन्तरङ्गत्वाच्च जुहुतात्। ४--३--३ पुस्पौ गुणः, अजुहवुः अहौषीत्। ३--४--५० भीह्रीभृहोस्तिव्वत् वाऽऽम्, जुहवांचकार जुहाव। ओहाक् त्यागे। ४-२-१०० हाकः शित्यविति व्यंजने इर्वा, जहितः जहीतः जहति। ४--१--२०२ यि लुक् हाकः शिति, जह्यात्। ४-१ १०१ आ च हौ हाकश्चादिदीतौ, जहीहि जहिहि जहाहि अजहुः। जिभी भये, बिभेति। ४-२-९९ भियो नवा शित्यविति व्यंजने इः, बिभितः बिभीतः बिभयांचकार बिभाय। ह्री लज्जायां, जिहेति जिह्रियति। पॄ पालनपूरणयोः। ४-१-५८ पॄभृमाहाङामिः शिति पूर्वस्य, पिपर्त्ति पिपृतः पपर्थ पप्रिव, बहु-

त्वात् ऋदन्तस्यापि, तेन। ४-४-११७ ओष्ठ्यादुर् ऋतः क्ङिति, उपान्त्यस्यापि, पिपूर्त्तः पूर्यात्। ऋ गतौ, भित्यादिना इयर्त्ति ऐयरुः आरत् अर्यात् ॥ इति परस्मैपदम् ॥

ओहाङ् गतौ, जिहीते। माङ् मानशब्दयोः, प्रणिमिमीते मिमते ममे। इत्यात्मनेपदं।

डुदाग् दाने, ददाति दत्तः ददति दद्यात्। ४-१-३१ हौ दः एत्वं च द्विः, देहि, हिव्यक्तेर्दत्तात् अदित। डुधाग् धारणे च, दधाति धेहि। २-१-७८ धागस्तथोश्च चात्स्ध्वोः दो धः चतुर्थान्तस्य, चानुकृष्टं नोत्तरत्रेति नेदं पदान्ते, यङ्लुप्यपि, धत्ते धत्थः धद्ध्वं धेहि अदधुः धेयात्। डुङ्भृग् पोषणे च, बिभर्ति अबिभरुः बिभरांचकार बभार। ४ ४-५७ ऋवर्णश्यूर्णुगः कितो नेट् एकस्वरात्, बभृषे। णिजृग् शौचे च। ४-१-५७ निजां शित्येत् पूर्वस्य, प्रणेनेक्ति। ४-३-१४ द्व्युक्तोपान्त्यस्य शिति स्वरे न गुणः, नेनिजानि। विजृग् पृथग्भावे, वेवेक्ति विचृगपि। विष्लृग् व्याप्तौ, वेवेष्टि अविक्षन्त, विषगपि। वृ क्षरणदीप्त्योः हृ प्रसह्यकरणे सृ गतौ भस भर्त्सनदीप्त्योः किकितौ ज्ञाने तुर त्वरणे धिष शब्दे धन धान्ये जन जनने गा स्तुतौ इत्येकादशापि। इति ह्वृत् ह्वाद्यः। इति अदादयः कितः। दिवू क्रीडाजयेच्छापणिद्युतिस्तुतिगतिषु।३-४-७२ दिवादेः श्यः शिति, दीव्यति। जृष् झृष् जरसि, जीर्यति अजरत् अजारीत् जेरतुः जजरतुः जीर्यात् जरिता जरीता, झृरिति। शो तक्षणे। ४-२-१०३ ओतः श्ये लुक्, श्यति, योगविभागे यप्यपि, अशात् अशासीत्। दो छो छेदने। षो अन्तकर्मणि, सेयात्। व्रीड लज्जायाम्। नृतै नर्तने। ४-४-५० कृतचृतनृतच्छृततृदोऽसिचः सादेर्वाऽशिति इट्, नर्तिष्यति नर्त्स्यति, ऐदित्त्वं यङ्लुपि क्तयोरनिट्त्वाय। कुथ पूतिभावे ( दुर्गन्धः )। पुथ हिंसायां। गुध परिवे-

ष्टने । राध वृद्धौ, साधपि संसिद्धावपिच । ४-१-२३ अवित्परोक्षासेट्थवोरेः न च द्विः राधेर्वधे , रेधिथ आरराधतुः । व्यध ताडने । ४--१--८१ ज्याव्यधः क्ङिति य्वृत्, विध्याति विविधतुः अव्यात्सीत् । क्षिप प्रेरणे, क्षेप्ता । पुष्प विकसने, अपुष्पीत् । तिम तीम ष्टिम ष्टीम आर्द्रभावे । षिवू ऊतौ ( वानं ) निषीव्यति न्यसीव्यत् न्यषीव्यत् । श्रिवू गतिशोषणयोः । ष्ठिवु क्षिवु निरसने । इष इच्छायां, इष्यति, इपूरपि । ष्णसू निरसने, स्नस्यति, घटादावपि । क्नसू व्हृतिदीप्त्योः । त्रसै भये, त्रसति त्रस्यति त्रेसतुः तत्रसतुः । प्युप् दाहे । षह पुह शक्तौ, तृसावपि । पुप पुष्टौ, पोष्टा अपुपत् । उच समवाये । लुट् विलोटने । विष्विदा गात्रप्रक्षरणे, स्वेत्ता । क्लिदौ आर्द्रभावे । जिमिदा स्नेहने । ४--३--५ मिदः श्ये गुणः, मेद्यति । ञिक्ष्विदा मोचने च । क्षुध बुभुक्षायां । शुध शौचे । क्रुध कोपे । षिधू संराद्धौ । ऋधू वृद्धौ । गृधू अभिकांक्षायां । रधौ हिंसासंराध्योः । ४-४-१०१ रध इटि तु परोक्षायामेव स्वरान्नोऽन्तः स्वरे, ररन्धिथ ररद्ध । तृपौ प्रीतौ । दृपौ हर्षमोहनयोः, अदार्प्सीत् अद्रपत् अद्राप्सीत् । कुप क्रोधे । गुप व्याकुलत्वे (गर्वः)। युप रुप लुप विमोहने । डिप क्षेपे । ष्टूप समुच्छ्राये । लुभ गार्ध्ये । क्षुभ संचलने ( रूपान्यत्वं )। णभ तुभ हिंसायां, अतुभत् । नशौ अदर्शने ( अनुपलब्धिः )। ४-४-१०९ नशो धुटि स्वरान्नोऽन्तः, ननंष्ठ ।२-३-७८नशः शः अदुरुपसर्गान्तरो नो रादेर्णः, प्रणश्यति, प्रनंष्टा प्रनंक्ष्यति । ४ ३-१०२ नशेर्नेश्वाऽङि, अनेशत् अनशत् । कुश श्लेषणे । भृशू भ्रंशू अधःपतने, भ्रश्यति । वृश् वरणे । कृश् तनुत्वे । शुष् शोषणे, शोष्टा । दुष वैकृत्ये ( रूपभंगः )। श्लिष आलिंगने । ३-४-५६ श्लिषः अनिटोऽद्यतन्यां सक्, आश्लिक्षत्, पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते

नोत्तरान्, तेनाङो बाधः, नतु ञिचः। ३-४-५७ नास्त्वाश्लेषे सक्। प्लुषू दाहे। ञितृष पिपासायां। तुष हृष तुष्टौ, हृषूरपि अलीकेऽपि। रुष रोपे। प्युष प्युस पुस विभागे, सो द्वित्वे। २-३-५९ न स्सः षः, सुपुस्स्यति। त्रिस प्रेरणे। कुस श्लेषे। असू क्षेपणे, आस्थत् उदस्यते। यसू प्रयत्ने। जसू मोक्षणे, हिंसार्थोऽपि, धात्वर्थविशेषणम्। तसू दसू उपक्षये। वसू स्तंभे। वुस उत्सर्गे। मुस खंडने, षान्तोऽपि, शुद्धधातूनामकृत्रिमं रूपमिति मुसलं। मसै परिणामे (विकारः), परिमाणेऽपि। शमू दमू उपशमे। ४--२--१११ शमसप्तकस्य श्ये दीर्घः, शाम्यति। तमू कांक्षायां। श्रमू खेदतपसोः। भ्रमू अनवस्थाने। क्षमौ सहने, ऊदिदपि। मदै हर्षक्षये। क्लमू ग्लानौ, क्लाम्यति। मुहौ वैचित्ये। द्रुहौ जिघांसायां। ष्णुहौ उद्गिरणे। ष्णिहौ प्रीतौ, केचिन्नात्र, शमाद्या अपिच। वृत्पुषादिः, इति परस्मैपदम्।

पूङो प्राणिप्रसवे अप्राणिप्रसवे इति। दूङ् परितापे(खेदः)। दीङ् क्षये। ४-३-९३ दीय् दीङः क्ङिति स्वरे, दिदीये। ४--२--७ यबक्ङिति दीङ आः, दाता उपादास्त। धीङ् अनादरे, आधारेऽपि। मीङ् हिंसायां मेता, माताऽपि। रीङ् श्रवणे। लीङ् श्लेषणे। ४-२ ९ लीङ्लिनोर्वाऽऽत् यबक्ङिति अखलचलि, लाता, न लीणः। डीङ् गतौ, विह यसा गनावपि। व्रीङ् वरणे। वृत्स्वादिः। पीङ् पाने, माङपि। ईङ् गतौ, अयांचक्रे, नाप्याम्। प्रीङ् प्रीतौ। युजि समाधौ। सृजि विसर्गे। वृतूङ् वरणे। पादि गतौ। ३--४--६६ ञिच् ते पदेस्तलुक्च, उदपादि। विदि सत्तायां, अवित्त। खिदि दैन्ये। ४--३--३५ सिजाशिषावात्मने नाम्युपान्त्येऽनिटौ कित्, खित्सीष्ट। युधि संप्रहारे। अनो रुधिः कामे। बुधि मनि ज्ञाने, भोत्स्यते अमंस्त। अनि प्राणन, अणिरपि,। जनैङ् प्रादुर्भावे।

४-२-१०४ जा ज्ञाजनोऽत्यादौ शिति, जायते। ४-३-५४ न जनवधः क्रृति ञिणाति णौ च वृद्धिः, अजनि अजनिष्ट, अन्यो वधिर्हिसार्थः। दीपै दीप्तौ, अदीपि। तपि ऐश्वर्ये वा। पूरैङ् आप्यायने। घूरै जूरैङ् ज्वरायां। धुरै गुरैङ् गतौ। शूरैङ् स्तंभे। तूरैङ् त्वरायां, गतेरपि, घूरादयो हिंसायां च। चूरैङ् दाहे। क्लिशि उपतापे। लिशि अल्पत्वे। काशि दीप्तौ, ऋदिदपि। वाशि शब्दे, ऋदिदपि ॥ इत्यात्मनेपदं ॥ शकी मर्षणे, शक्ता, शकितेति, अनीदपि, पुषादित्वात् व्यतिहारे व्यत्यशकतेति। शुच्यैी पूतिभावे(क्लेदः)। रंजी रागे,अरंक्त। शपी आक्रोशे। मृषी तितिक्षायां। णही बंधने,अनद्ध। इत्युभयपदं, इति चितो दिवादयः।

पुग् अभिषवे (संधानं पीडनमंडने वा) ( स्नानं पीडा च )। ३-४-७५स्वादेःश्नुःशिति,सुनोति। ४-२-८७ वम्यविति वा असंयोगादोर्लुक्, सुनुवः सुन्वः। ४-२-८६ असंयोगादोः प्रत्ययाद्वेर्लुक्, सुनु। २-३-६२ सुगः स्यसनि न षः, निसोष्यति असावीत् असोष्ट, अभिषुणोति। षिग् बंधने। शिग् निशातने। डुमिग् प्रक्षेपणे। ४-२-८ मिग्मीगोऽखलचलि यबक्ङिति आः, माता। चिग् चयने। ४-१-३६ चेः किर्वा सन्परोक्षयोः, चिकाय चिचाय, घटादावपि आत्वं च वेति। धूग् कंपने, धोता धविता आधावीत्, धुगपि। स्तृग् आच्छादने। ४-४-३७ संयोगादृतः सिजाशिषोर्वेडात्मने, स्तरिषीष्ट स्तृषीष्ट। कृग् हिंसायां। वृग् वरणे, अवरिष्टाम्, ववरिथ, ववृव। ४-४-३६ इट् सिजाशिषोरात्मने वृतो वा, वृषीष्ट वरिषीष्ट, वरिता वरीता। इत्युभयपदं ॥ हि गतिवृद्ध्योः, प्रहिणु। ४-१-३४ अङे हिहनो हो घः पूर्वात्, जिघाय, विधानान्न ज इति पूर्वात्। श्रु श्रवणे, शृणोति शुश्रोथ, गतावपि। डुदु उपतापे। पृ प्रीतौ। स्पृ पालने च, जीवने, स्पृगपिच। शक्ल

शक्तौ, पुष्यादित्वेन व्यतिहारे व्यत्यशकतेति । तिक तिग पघ हिंसायां, आघावास्कन्दनेऽपि, सघपि, चषघपि, त्रयो हिंस यामपिच, विघपि । राध साध संसिद्धौ । ऋधू वृद्धौ । आप्लृ व्याप्तौ । तृप प्रीणने, तृप्नुहि, अत्र क्षुभ्नादित्वान्न णः । दम्भू दंभे । ४-१-२८ दंभः एः नलुक् न च द्विः । ४-१-२९ थे वा, देभिथ ददंभिथ, नोपधः, मोपधो दंभेति । कृवु हिंसाकरणयोः, कृणोति । धिवु गतौ, धिनोति, प्रीणनेऽपि । अड व्याप्तौ । दध घातने । ऋ क्षि जिरि चिरि दास न्हु हिंसायामित्यपि । ञिधृषा प्रागल्भ्ये । इति परस्मैपदं । ष्टिघि आस्कंदने, स्तिघ्नुते । अशौङ् व्याप्तौ, संघातेऽपि, आनशे । इत्यात्मनेपदं । टितः स्वादयः ।

तुदी व्यथने । ३-४-८१ तुदादेः शः शिति, अतुदत् । भ्रस्जी पाके । ४-१-८४ ग्रहव्रश्चभ्रस्जप्रच्छः क्ङिति य्वृत्, भृज्जति, व्यचिवशिवृश्चिभ्रस्जिप्रच्छीनां न यङ्लुपीति । ४-४-६ भृज्जो भर्ज् वाऽशिति, बभर्ज बभ्रज्ज बभ्रष्ठ, स्थानिवद्भावेन य्वृति भृज्ज्यात् भ्रष्टा भर्ष्टा । क्षिपी प्रेरणे । दिशी अतिसर्जने ( त्यागः ), देष्टा अदिक्षत् । कृषी विलेखने, अकृक्षत अकृष्ट । मुच्लृ मोचने । ४-४-९९ मुचादितृफदृफगुफशुभोभः शे नोऽन्तः स्वरात्, मुंचति । षिची क्षरणे । विद्लृ लाभे, विन्दते वेत्ता, वेदितेति । लुप्लृग् छेदने । लिपी उपदेहे (वृद्धिः), लिंपति ॥ इत्युभयपदं ॥ कृतै छेदने, कर्त्तिष्यति कर्त्स्यति अकर्त्तीत् । खिद परिघाते, परितापेऽपि, खेत्ता, खेदितेति । पिश् अवयवे, पेशिता ॥ इति मुचादि ॥ रि पि गतौ, रियति रियतुः । धि धारणे । क्षि निवासगत्योः । षू प्रेरणे । मृ प्राणत्यागे । ३-३-४२ म्रियतेरद्यतन्याशिषि च आत्मनेपदं, चाच्छिति, म्रियते अमृत मृषीष्ट । कॄ विक्षेपे । ४-४-९३ किरो लवने उपात्स्सडादिः । ४-४-९४ प्रतेश्च वधे

किरः स्सट्। ४-४-९५ अपाच्चतुष्पात्पक्षिशुनि हृष्टान्नाश्रयार्थे स्सट् ३-३-३० अपास्किरः आत्, अपास्किरते, चकरतुः अकारीत्, नास्येटो दीर्घ इति। गॄ निगरणे (भोजनं)। २-३-१०२ नवा स्वरे ग्रो रो लः, गिरति गिलति गीर्यात्। लिख अक्षरविन्यासे, कुटादिरपि। जर्च झर्च परिभाषणे, तर्जनेऽपि, चर्चोऽपि। त्वच संवरणे। रुच स्तुतौ। ओव्रश्चौ छेदने, वृश्च्यात्। ऋच्छ इंद्रियप्रलयमूर्त्तिभावयोः, गतावपि, आनर्च्छ। विच्छ गतौ, विच्छायेत्, अशर्वाीति विच्छेत्, शे नित्यं वान्तश्चापि। उच्छै विवासे (अतिक्रमः)। मिच्छ उत्क्लेशे (बाधनं)। उच्छु उञ्छे। प्रच्छ ज्ञीप्सायां, पृच्छति। ४-१-१०८ अनुनासिके च छ्वः शूट्, चात् क्वौ धुटि च, प्रष्टा, पिच्छपि। उब्ज आर्जवे। सृज विसर्गे, ससर्जिथ सस्रष्ठ अस्राक्षीत्। रुजो भंगे। भुजो कौटिल्ये। टुमस्जोः शुद्धौ (स्नानं ब्रुडनं च)। ४-४-११०

मस्जेः सः नो धुटि, ममंक्थ। मंजिः सौत्रः। जर्ज झर्ज परिभाषणे, तर्जनेऽपि। उज्झ उत्सर्गे, दोपान्त्यः। जुड गतौ। पृड मृड सुखने। कड मदे, भक्षणेऽपि कुटादि चापि। पृण् प्रीणने। तुण कौटिल्ये। मृण् हिंसायां। द्रुण् गतिकौटिल्ययोश्च। पुण शुभे। मुण प्रतिज्ञाने। कुण् शब्दोपकरणयोः। घुण घूर्ण भ्रमणे। चृतै हिंसाग्रंथयोः, चर्तिष्यति चर्त्स्यति अचर्तीत्। णुद प्रेरणे, णुदीरपि। षद्लृ अवसादने, सीदति, पाठो विकल्पेनान्तार्थं ज्वलादौ विकल्पेन णार्थः। विध विधाने। जुन शुन गतौ। छुप स्पर्शे, छोप्ता। रिफ कथनयुद्धहिंसादानेषु, ऋफपि। तृफ तृंफ तृप्तौ, तृफति तृंफति, पान्तौ न च लुगपि नः। ऋफ ऋंफ हिंसायां, र्यादिरपि। दृफ दृंफ उत्क्लेशे। गुफ गुंफ ग्रंथने। उभ उंभ पूरणे। शुभ शुंभ शोभार्थे, सुभपि। दृभै ग्रंथे। लुभ विमोहने, लोभिता लोब्धा। कुर शब्दे, कूर्यात्, कुर्यादपि। क्षुर विलखने। खुर

छेदने ( विलेखनं ) च । घुर भीमार्थशब्दयोः । पुर अग्रगमने । मुर संवेष्टने । सुर ऐश्वर्यदीप्त्योः, पादिरपि । स्फुर स्फुल स्फुरणे, चलने कुटादावपि । किल श्वैत्यक्रीडनयोः । इल गति-स्वप्नक्षेपणेषु । हिल हावकरणे । शिल सिल उंछे, पिलपि । तिल स्नेहने । चल विलसने । चिल वसने । विल वरणे । बिल भेदने । णिल गहने । मिल श्लेपणे । स्पृश संस्पर्शे; स्प्रक्ष्यति स्पर्क्ष्यति । रिश रुश हिंसायां । विश प्रवेशने । मृश आमर्शने ( स्पर्शः ), अम्राक्षीत् अमार्क्षीत् अमृक्षत् । लिश रुपै गतौ । इष इच्छायां, इच्छति एषिता एष्टा । मिष स्पर्धायां । वृहौ उद्यमे । तृहौ तृंहौ स्तृहौ स्तृंहौ हिंसायां, पाघावपि । कुट कौटिल्ये । ४-३-१७ कुटादेर्ङिद्वदञ्णित्, चुकुटिथ, विकल्पेन णित्त्वात् चुकोट चुकुट । गु पुरीषोत्सर्गे, गूरपि, अङितीति अगुपीत् । ध्रु गतिस्थैर्ययोः, ध्रूरपि । णू स्तवने, अनुवीत् । धू विधूनने, धुवति । कुच संकोचने । व्यच व्याजीकरणे । ४-१-८२ व्यचो-ऽनसि ङ्किति य्वृत्, विचति, गणनिर्दिष्टस्यानित्यत्वात् विव्य-चिथ व्यचिष्यति । गुज शब्दे । घुट प्रतिघाते, गुडपि । चुट छुट त्रुट छेदने । तुट कलहकर्माणि । मुट आक्षेपप्रमर्दनयोः । स्फुट विकसने । पुट लुट संश्लेषणे, लुठपि । कृड घसने, घनत्वेऽपि । कुड बाल्ये च । गुड रक्षायां । जुड बंधने । तुड तोडने । लुट घुट स्थुड संवरणे । व्रुड उत्सर्गे च । भ्रुड भ्रुड संघाते; संवरणेऽपि । दुड हुड त्रुड निमज्जने, हुंडिः संघातेऽपि । चुण छेदने । डिप क्षेपे । छुर छेदने । स्फुर स्फुरणे; चलनेऽपि । २ ३-५२ निर्नेः स्फुरस्फुलोः षः, निष्फुरति । २-३-५४ वेः, विष्फुरति । स्फुल संचये च ॥ इति परस्मैपदं ॥ कु कुङ् शब्दे, कुवते । गुरैङ् उद्यमे । इति कुटादिः ॥ कडस्फरस्फलाः पाठ त् ञ्णिति न वृद्धिः, लिखीरपि च । पृङ् व्यायामे, व्याप्रियते । दृङ्

आदरे, आदद्रे। धृङ् स्थाने, धारणऽपि । ओविजैङ् भयचलनयोः। ४-३-१८विजेरिट् ङिद्वत्, उद्विजिता। ओलजै ओलस्जैङ् व्रीडे, नजैङपि, लज्जते। ष्वंजि संगे। २-३-४५ स्वञ्जश्च उपसर्गनाम्यादेः षः द्वित्वेऽट्यपि, चात्परोक्षायां त्वादे, अभ्यष्वजत पर्यष्वजत पर्यस्वजत। ४-३-२२ स्वञ्जेर्नवा अवित्परोक्षा किद्वत्, अभिषस्वजे सस्वंजे। जुषैङ् प्रीतिसेवनयोः। इत्यात्मनेपदं। तुदादयस्तितः।

रुधृग् आवरणे।३-४-८२रुधां स्वराच्छनो नलुक् च शिति, रुणद्धि रुंद्धः रुंद्धे अरुणत् अरौत्सीत्। रिचृग् विरेचने (निःसारणे)। विचृग् पृथग्भावे। युजृग् योगे। क्षुदृग् संपेषे। भिदृग् विदारणे। छिदृग् द्वैधीकरणे। ऊधृदृग् दीप्तिदेवनयोः, वमनेऽपि। ऊतृदृग् हिंसानादरयोः, तृणत्ति तर्त्स्यति तर्दिष्यति। इत्युभयपदं। पृचै संपर्के। वृचै वरणे, वृजपि, वर्जने सोऽपि। तंचू तंजौ संकोचने, तनक्ति, तंचौरपि। भंजो आमर्दने। भुज पालनाभ्यवहारयोः (भोजने), भोक्ता, गिदिति। अंजौ व्यक्ति-(प्रकटता) म्रक्षण (घृतादिसेकः) कान्तिगतिषु, केवलो म्रक्षणे, आनञ्ज आनक्। ४-४-८४ सिचोऽञ्जेः आदिरिट्, आञ्जीत्। ओविजै भयचलनयोः, विनक्ति। कृतै संवेष्टने। उंदै क्लेदने। शिष्लृ विशेषणे (गुणान्तरोत्पादनं)। पिष्लृ संचूर्णने। हिसु तृह हिंसायां, हिन्धि, हिंसेर्हैरत् भुजिभञ्जिभ्यां तु वेति कश्चित्, न च तच्चारु, अहिनत्। ४-३-६२ तृहःश्नादीत् व्यंजनादौ विति, तृणेढि तृण्हंति अतृण्ढ। इति परस्मैपदं। खिदि दैन्ये। विदि विचारणे। ञीन्धैङ् दीप्तौ, सामिन्धांचक्रे, इंधेः सोपसर्गान्नाम् समोऽन्यत्रापि वेति आमि संपूर्व इति च। इत्यात्मनेपदं, इति रुधादयः पितः।

तनूग् विस्तारे, तनोति अतनुत। ४-३-६८ तन्भ्यो

वा तथासि न्णोश्च सिचोऽपि लुब्, न चेट्, अतत अतनिष्ट। पणुग् दाने, सनोति, णान्त इति। ४-३-६९ सनस्तत्रा वा नलुकि, असात असनिष्ट, नित्यं नेति च। क्षणूग् क्षिणूग् हिंसायां, अक्षणीत् क्षेणोति, णत्वे गुणाभावात् क्षिणोत्यपि। ऋणूग् गतौ, अर्णोति। तृणूग् अदने, आदानेऽपि। घृणूग् दीप्तौ, णान्तोऽपि, सप्त नान्ताः। इत्युभयपदिनः। वनूङ् याचने। मनूङ् अवबोधने। इत्यात्मनेपदं, यिताःतनादयः।

डुक्रीग् द्रव्यविनिमये। ३-४-७९ क्र्यादेः शिति श्नाः, क्रीणाति क्रीणीते क्रीणते। पिग् बंधने। प्रीग् तृप्तिकान्त्योः। श्रीग् पाके। मिग् हिंसायां, अमास्त। युग्, बंधने। स्कुग् आप्रवणे (उद्धारणे)। ३-४-७८ स्तंभूस्तुंभूस्कंभूस्कुंभूस्कोः श्ना च, चात् श्नुः, स्कुनाति स्कुनोति, स्तंभादयस्सौत्राः। २-३-४१ अङ्प्रतिस्तब्धनिस्तब्धे स्तंभः पः। उपसर्गस्थान्नाम्यादेः। २-३-४२ अवाच्चाश्रयोर्जाविदूरे चादडे, अवष्टभ्नाति, चोऽनुक्तसमुच्चयार्थः, उपाष्टभ्नात्, वितष्टंभ। २-३-५५ स्कभ्नः वेः, विष्कभ्नाति। क्नुग् शब्दे। द्रूग् हिंसायां, गतावपि। ग्रही उपादाने, गृह्णाति। ३ ४-९० व्यंजनाच्छ्नाहेरानः, गृहाण। ४-४-३४ गृह्णोऽपरोक्षायां दीर्घः इटः, ग्रहीता ग्रहीष्यति अग्रहीत्, स्थानित्वात्सेर्लोपः। पूग् पवने। ४-२-१०५ प्वादेर्ह्रस्वः शित्यत्यादौ, पुनाति पुनीते। लूग् छेदने। धूग् कम्पने। स्तॄग् आच्छादने, स्तरिषीष्ट। कॄग् हिंसायां, कृगपि। वॄग् वरणे, वृगपि। इत्युभयपदं। ज्या वयोहानौ, जिनाति, न जेर्गिः लाक्षणिकत्वात् जिज्यतुः। री गतिरेषणयोः। ली श्लेषणे। ब्ली वरणे। ल्वी गतौ, ल्वीनातिरपि ल्पीतिच। कॄ मॄ शॄ हिंसायां। ४-२-२० ऋः शॄदॄप्रः परोक्षायां वा, शश्रतुः शशरतुः। पॄ पालनपूरणयोः। वॄ भरणे, धरणेऽपि। भॄ भर्जने (पाकः) च, भर्त्सनेऽपि। दॄ विदारणे, भयेऽपि। जॄ वयोहानौ। नॄ नये। गॄ शब्दे। ॠ गतौ, ऋणाति अरिता अरीता। इति प्वादिःल्वादिश्च। ज्ञा

अवबोधने, जानाति। क्षिण् हिंसायां, अक्षैषीत्, क्षीरपि। व्री वरणे। भ्री भरणे, भये ल्वादी अपि च। हेठ भूतप्रादुर्भावे, हेठ्णाति। मृड् सुखने। श्रंथ विमोचनप्रतिहर्षणयोः।४-१-२७वा श्रन्थग्रथो नलुक् च वा एर्न च द्विः, श्रेथतुः शश्रन्थतुः, श्रन्थग्रन्थदम्भीनां अविति परोक्षायां नित्यमेत्वनलुकौ अविति नलोप एत्वं चोक्ते इति च। मंथ विलोडने। ग्रंथ संदर्भे। कुन्थ सक्लेशे, श्लेपणेऽपि। मृद क्षौदे। गुध रोषे। बंध बंधने, बध्नाति संभंत्स्यति। क्षुभ संचलने, क्षुभ्नीतः- णभ तुभ हिंसायां। खव हेठवत्, खौनाति खवान, क्वेद् वलुक् चापि खचपि च। क्लिशौ विबाधने। अश भोजने। इष आभीक्ष्ण्ये, वेऽपि तादौ। विष विप्रयोगे। प्रुष प्लुष स्नेहसेचनपूरणेषु। मुष स्तेये। पुष पुष्टौ। कुष निष्कर्षे (बहिःकर्षणं)। ४-४-३९ निष्कुशः स्ताद्यशितो वेट्, निष्कोषिता निष्कोष्टा निरकोषीत् निरकुक्षत्, निर्निसौ। ध्रस्र् उञ्छे॥ इतिपरस्मैपदं॥ वृङ् संभक्तौ (सेवा) वरिषीष्ट वृषीष्ट। इति क्र्यादयः शितः॥

चुरण् स्तेये। ३-४-१७ चुरादिभ्यो णिच्, उभय-पदमपि णिचः, चोरयति, णीत्यादिना ङे द्वित्वे णेर्लुकि ह्रस्वे दीर्घत्वे च अचूचुरत् चोरयामास। पॄ पूरणे, पूरपि। धृ स्रवणे, घृ सृ आवरणेऽपि। शुल्क वल्क भावने, अववल्कत्। नक्क धक्क नाशने। चक्क चुक्क व्यथने, चिक्कोऽपि। टकु बंधने, टंकयति टंकति, अनित्यो णिच्। अर्क स्तवने, आर्किकत्। पिच्च कुट्टने। पच्चु विस्तारे। म्लेच्छ म्लेच्छने। ऊर्ज बलप्राणयोः। युज पिजु हिंसाबलदाननिकेतनेषु। क्षुजु कृच्छ्रजीवने। पूज पूजायां। गर्ज मार्ज शब्दे, अममार्जत्, मर्चमर्जावपि। तिज निशाने। वज व्रज मार्गण (शर) संस्कारगत्योः, मार्गसंस्कारेऽपि। रुज हिंसायां। नट अवस्यंदने (भ्रंशः)। चट तुट चुट चुड्ड छुड्ड छेदने। कुट्ट कुत्सने च। पुट्ट चुट्ट पुट्ट अल्पीभावे, सुट्ट अनादरेऽपिच। पुट मुट संचूर्णने। अट्ट स्मिट अनादरे, अट्टोऽल्पीभावेऽपि। लुंट स्तेये च। स्निट स्नेहने। घट्ट चलने। खट्ट संवरणे। षट्ट स्फिट्ट हिंसायां,

बलदाननिकेतनेष्वाद्योऽनादरे चान्त्योऽपि । स्फुट परिहासे । कीट वर्णने, बन्धेऽपि । वडु विभाजने, डान्तोऽपि । रुट रोषे । शठ श्वठ श्वठु संस्कारगत्योः । शुठ आलस्ये । शुठु शोषणे । गुठु वेष्टने । लड उपसेवायां । स्फुडु परिहासे । ओलडु उत्क्षेपे, ओलण्डयति, ओदिदु ल्ठुरपिच । पीड गहने (बाधा), अवगाहनेऽपि । ४-२-६३ भ्राजभासभाषदीपजीवपीडमीलकणरणवणभणश्रणह्वेहेठलुटलुपलपां नवा णौ उपान्त्यस्य ह्रस्वः, अपिपीडत् अपीपिडत् , बहुत्वाद्भ्रासः । तड आघाते । खड खडु भेदे । कडु खंडने च, खुडूरपि । कुडु रक्षणे । गुडु वेष्टने च । चुडु छेदने । मडु भूषायां । भडु कल्याणे, भदुरपि । पिडु संघाते, पडुरपि । ईड स्तुतौ, ईडयति । चडु कोपे । जुडु चूर्ण वर्ण प्रेरणे (दलनं) । चूण तूण संकोचने, तूणयति । श्रण दाने, अशिश्रणत् अशश्राणत् । पूण संघाते । चितु स्मृत्यां । पुस्त बुस्त आदरानादरयोः, पुस्तो वन्दनेऽपि । मुस्त संघाते । कृत संशब्दने ( ख्यातिः ) । ४--४--१२३ कृतः कीर्तिः, कीर्तयति, येन विना यन्न भवति तत्तस्यानिमित्तस्यापि निमित्तं, ततो णिजभावे कृतति । ४-४-२७ ऋदृवर्णस्य ङे णावुपान्त्यस्य, अचीकृतत्, अवर्णे एव णाविति अचिकीर्तत् । स्वर्त पथु गतौ, श्वर्त्तः कृच्छ्रजीवनेऽपिच । श्रथ प्रतिहर्षे, पाठादात्मनेपदमपि । पृथ प्रक्षेपणे, पर्थपार्थावपि । प्रथ प्रख्याने, प्रक्षेपणेऽपि । ४-१-६५ स्मृदृत्वरप्रथम्रदस्तॄस्पशेरः असमानलोपे ङे णौ, अपप्रथत्, न दीर्घः । छद संवरणे, छादयति, अदन्तोऽपि । चुद संचोदने । मिदु स्नेहने, मिदु मिदुरपिच । गुर्द निकेतने, आद्यनिवासनेऽपि । छर्द वमने । गर्द शब्देऽपि, गर्जेपि । बुध हिंसायां, बुठुरपि । वर्ध छेदनपूरणयोः । गर्ध अभिकांक्षायां । बंध बध संयमने, अबीबधत् । छपु गतौ । क्षपु क्षान्तौ । ष्टूप समुच्छ्राये, स्तूप स्तुप चापि । डिप क्षेपे । ह्लप व्यक्तायां वाचि । डपु डिपु संघाते, अभिमर्दने भान्तावपि च । शूर्प माने । शुल्ब सर्जने च । डबु डिबु क्षेपे, दभ-

दसुदिभ्वोऽपि । संब संबंधे, सांब षंब् शम्बपिच । कुबु आच्छादने । लुबु तुबु अर्दने, तुपुरपि । पुर्ब निकेतने । यम परिवेषणे । ४-२-२९ यमोऽपरिवेषणे णिचि च, चादणिचि णौ ह्रस्वः, जिणम्परे तु वा दीर्घः, यमयति, परिवेषणे इति । व्यय क्षये । यत्रु संकोचे । कुद्रु अनृतभाषणे, गुद्रुराप । श्वभ्र गतौ । तिल स्नेहने । जल अपवारणे, लजपि । क्षल शौचे । पुल समुच्छ्राय, पुलदपि । बिल भेदे, भिलपि । तल प्रतिष्ठायां । तुल उन्माने । दुल उत्क्षेपे । बुल निमज्जने । मूल रोहणे, मुलपि । कल किल पिल क्षेपे । पल रक्षणे, पालपि । इल प्रेरणे । चल भृतौ । सान्त्व सामप्रयोगे, षादिः साम सान्त्वप्रयोगेऽपि च । धूश कान्तीकरणे, धूस धूषपि च । श्लिष श्लेषणे । लुष हिंसायां । रुष रोषे । प्युष उत्सर्गे । पसु नाशने । जसु रक्षणे, दहुरपि । पुंस अभिमर्दने । ब्रूस पिस जस बर्ह हिंसायां । पिस् गतौ, वलदाननिकेतनेष्वपि च । ष्णिह स्नेहने । म्रक्ष म्लेच्छने, रोषेऽपि । भक्ष अदने । पक्ष परिग्रहे, पक्षयति । लक्षी दर्शनाङ्कनयोः ॥

इतोऽर्थविशेषे आलक्षिणः, ज्ञा मारणादिनियोजनेषु ४--२--३० **मारणतोषणनिशाने ज्ञश्च** णिच्यणिचि णौ ह्रस्वः, जिणम्परे तु वा दीर्घः, निशामनेऽपि, ज्ञपयति । च्यु सहने, हसनेऽपि । भू अवकल्कने ( मिश्रीकरणे ), अवकल्पनेऽपि । बुक्क भषणे, भाषणे आभाषणेऽपि च । रक लक रग लग आस्वादने, आसादनेऽपि । लिगु चित्रीकरणे । चर्च अध्ययने, चर्बपि । अंच विशेषणे ( अतिशयः )। मुच प्रमोचने, प्रयोजनेऽपि । अंच प्रतियत्ने ( संस्कारे )। भज विश्राणने । चट स्फुट भेदे । घट संघाते । नवगण्युक्ता हंत्यर्थाश्च स्वार्थे ण्यन्ताः, आत्मनेपदाद्यर्थं हिंसार्थानां पाठः, चट आस्फुटघटा हन्त्यर्था इति । कण निमीलने । यत निकारोपस्कारयोः, निरश्च प्रतिदाने, निर्यातयति । शब्द

उपसर्गात् भाषाविष्कारयोः, अनुपसर्गाद् भाषाशवपि । घूद आश्रवणे ( प्रतक्षणे ) । आक्रंद सातत्ये । ष्वद आस्वादने, संवरणेऽपि । आस्वदः सकर्मकात् (णिः) । ग्रस ग्रहणे पुष् धारणे दल विदारणे लोक्ट तर्के भासार्थः पूर आप्यायने स्वद संवरणे इति स्वदन्ता अपि । मुद संसर्गे । गृध प्रसहने ( अभिभवः ) अप्रसहनेऽपि (अमर्षः) । कृप अवकल्कने, भूकृपौ चिन्तनेऽपि । जभु नाशने, जभपि, जंभयति । अम रोगे । चर असंशये, संशयेऽपि । पूर आप्यायने । दल विदारणे, दलयत्यपि । दिव अर्दने, अतेरपि । पश पष बंधने । पुष धारणे । घुषृ विशब्दने(विशिष्टशब्दः) अविशब्दार्थस्य घुषेरनित्यो णिच्, जुघुषुः; ऋदित्त्वमनित्यणिच्त्वात् , आङः सान्त्येऽपि । भूष तसु अलंकारे । जस ताडने । त्रस वारणे, ग्रहणे धारणेऽपि च । वस स्नेहच्छेदावहरणेषु । ध्रस उत्क्षेपे, उञ्छे उद्रादिरयं ध्रसूशपि च । ग्रस ग्रहणे । लस शिल्पयोगे, लष लशप्चि । अर्ह पूजायां । मोक्ष असने । लोकृतर्क-रघुलघुलोचृविच्छअजुतजुपिजुलजलजुलुजुभजुपटपुटलुटघटघट्टतवृ-पुथनदवृधगुपधूपकुपचिवदशुकुशुत्रसुपिसुकुसुदसुवर्हबृहुवल्हअहु-वहुमहुभाषार्थाः रुटनटलुडतडा अपि । इति परस्मै । युङ् जुगुप्सायां, यावयते, युजिरपि । गृङ् विज्ञाने, क्ष्णि विज्ञापनेऽपिच । वंचि प्रलंभने ( मिथ्याफलाख्यानं ) णिगन्तादफलवत्यात्मनेपदार्थं गृधिवंचेरित्यपि । कुटि प्रतापने । मदि तृप्तियोगे । विदि चेतनाख्याननिवासनेषु, विवादेऽपि । मानि स्तंभे (गर्वः) । बलि भलि आभंडने । दिवि परिकूजने । वृषि शक्तिबंधे, प्रजनासामर्थ्येऽपि । कुत्सि अवक्षेपे । लक्षि आलोचने ।

हिष्कि किष्कि हिंसायां । निष्कि परिमाणे । तर्जि संतर्जने । कूटि अप्रमादे, कूडिरपि । त्रुटि छेदने । शठि श्लाघायाम्, शटशलिरपि । कूणि संकोचने । तूणि पूरणे, तूलपि । भ्रूणि

आशंसायां, आशङ्कायामपि । चिति संवेदने । वस्ति गंधि अर्दने । डपि डिपि डंपि डिंपि डंभि डिंभि संघाते । स्यमि वितर्के, णिचि चेति ण्यधिकारे णिज्ग्रहात् ह्रस्वाभावे स्यामयते । शमि आलोचने । कुस्मि अपनयने ( कुस्मयने ) । गुरि उद्यमे । तन्त्रि कुटुंबधारणे, कुटुम्बयतेऽपि । मन्त्रि गुप्तभाषणे । ललि ईप्सायां, उल्ललयते उल्ललते । स्पशि ग्रहणश्लेषणयोः, अपस्पशत्, सौत्रो वा । दशि दशने, दाशि दानेऽपि । दंसि दर्शने च । भत्सि संतर्जने । यक्षि पूजायां ।

अथादन्ताः णिच्येव , अंक लक्षणे , अङ्कयति आंकिकत् , यङ्निवृत्त्यर्थः, ष्वर्थ इति । श्लेष्क दर्शने । सुख दुःख तत्क्रियायाम्, अल्लुकः स्थानित्वात् सुखयति । अंग पदलक्षणयोः । अघ पापकरणे । रच प्रतियत्ने । सूच पैशून्ये । भाज पृथक्कर्मणि । सभाज प्रीतिसेवनयोः, प्रीतिदर्शनयोरपि । लज लजु प्रकाशने । कूट दाहे , आमन्त्रणेऽपि । पट वट ग्रंथे ( वेष्टने ), विभाजनेऽपि । खेट भक्षणे, खेडपि । खोट क्षेपे, दन्तावपि । पुट संसर्गे । वट्ट विभाजने, वण्टापयत्यपि । शठ श्वठ सम्यग्भाषणे । दंड निपातने । व्रण गात्र विचूर्णने । वर्ण वर्णक्रियाविस्तारगुणवचनेषु । पर्ण हरितभावे । कर्ण भेदे । तूण संकोचने । गण संख्याने । ४-१-६७ ई च गणः ङे, चादः, अजीगणत् अजगणत्, समानलोपित्वादप्राप्तं , चाण्णिसंनियोग एव चुरादीनामदन्ततेति पक्षेऽनदन्तत्वे रूपद्वयं, यथादर्शनमन्यत्राचीकथत् । कुण गुण केत आमन्त्रणे ( गूढोक्तिः ) वा, णिच्चुराद्योर्विकल्पार्थो वा, निश्रायणनिमन्त्रणयोरपि केतः । पत गतौ । वात गतिसुखसेवयोः, सुखसेवनयोर्वापि च । कथ वाक्यप्रबंधे । श्रथ दौर्बल्ये । छेद द्वैधीकरणे । गद गर्जे । अंध दृष्ट्युपसंहारे । स्तन गर्जे । ध्वन शब्दे । स्तेन चौर्ये, अतिस्तेनत् । ऊन परिहाणे । कृप दौर्बल्ये, कल्पयति । रूप रूपक्रियायाम् । क्षप लाभ प्रेरणे, लभपि । भाम क्रोधे ।

गोम उपलेपने । साम सान्त्वने । श्राम आमन्त्रणे । स्तोम श्लाघायाम् । व्यय वित्तसमुत्सर्गे, वित्तो गतावपि च । सूत्र विमोचने ( ग्रंथनं ) । मूत्र प्रश्रवणे । पार तीर कर्मसमाप्तौ । कत्र गात्रशैथिल्ये, कर्त्तकर्तृकच्छा अपि । चित्र चित्रक्रियाकदाचिद्दृष्ट्योः। छिद्र भेदे। मिश्र संपर्चने । वर ईप्सायां। स्वर आक्षेपे। शार दौर्बल्ये, शरपि । कुमार क्रीडायाम्, लान्तोऽपि। कल संख्यानगत्योः । शील उपधारणे ( अभ्यासः परिचयो वा ) । वेल काल उपदेश ( कालोपदेशे ) । पल पूल लवनपचनयोः । अंश समाघाते (विभंजने), अंसोऽपि, एप अनुपसर्गः गतावपि । गवेष मार्गणे । मृप क्षान्तौ । रस आस्वादनस्नेहनयोः । वास उपसेवायाम् । निवास आच्छादने । चह परिकल्कने (दम्भः) । ४-२-३१ चहणःशाठ्ये णिचि ह्रस्वःजिणम्परे वा दीर्घः,चहयति । मह पूजायाम् । रह त्यागे । रहु गतौ । स्पृह ईप्सायाम् । रूक्ष पारुष्ये

॥ इति परस्मैपदं ॥ मृगङ् अन्वेषणे। अर्थङ् याचने । पदङ् गतौ। संग्रामङ् युद्धे, संग्रामोऽप । शूर वीरङ् विक्रान्तौ । सत्रङ् संदानक्रियायां , संतानक्रियायामपि । स्थूलङ् परिबृंहणे ( पीनत्वं ) । गर्वङ् माने । गृहङ् ग्रहणे । कुहङ् विस्मापने ॥ इत्यात्मनेपदं ॥ युज संपर्चने। ३-४-१८ युजादेर्नवा स्वार्थे णिच्, योजयति योजति । ली द्रवीकरणे । ४-२-१५ लियो नोऽन्तः स्नेहद्रवे वा, लीनयति, लापयति, लालयत्यपि च । मी मतौ, गतावपि । प्रीग् तर्पणे । ४-२-१८ धूग्प्रीगोर्नः णौ, प्रीणयति, पाययत्यपि, न यौजादिकावित्यपि । धूग् कम्पने । वृग् वरणे । जॄ वयोहानौ । चीक शीक आमर्षणे । मार्ग अन्वेषणे । पृच संपर्चने । रिच वियोजने । वच भाषणे, वदाच, संदेशनेऽपि । अर्चि पूजायाम् । वृजै वर्जने । मृजौ शौचालंकारयोः । क्रुठु शोके । श्रन्थ ग्रन्थ संदर्भे । क्रथ अर्दि हिंसायाम् । श्रथ बंधने

च, मोक्षणेऽपि। वदि भाषणे, संदेशनेऽपि, पक्ष आत्मने। छद अपवारणे। आङः सद गतौ। छुद संदीपने, छूर्देऽपि। शुधि शुद्धौ, शुधपि। तनू श्रद्धाघाते, श्रद्धोपहिंसयोरपि, उपसर्गात् दैर्घ्ये। मान पूजायाम्। तपि दाहे। तृप प्रीणने। चृत् दृप् संदीपनेऽपि। आप्लृ लम्भने, अत्रापि वाऽऽप्नोरिति। दृभै भये। ईर क्षेपे, गतावपि। मृषङ् तितिक्षायां। अर्चिअर्दिशुधितपिवदिमृषयः परस्मै इत्यादि। शिष असर्वोपयोगे ( अनुपयोगः ), विपूर्वोऽतिशये ( उत्कर्षः )। जुष परितर्कणे, परितर्पणेऽपि। धृष प्रसहने, धृषापि। हिसु हिंसायाम्। गर्ह विनिन्दने। षह मर्षणे। बहुलमेतान्निदर्शनं, क्लीबस्तम्भूचुलुम्पाद्या गणाष्टकोक्ताः स्वार्थे णिजन्ताः, प्रयोज्यव्यापारेऽनुप्रवेशो विना णिगं, उदाहरणाद्यर्थाः खण्डादय इति बहुलता॥ इति वृद्युजादयः। इति चुरादयो णितः।

३-४-२० प्रयोक्तृव्यापारे णिग् वा, प्रेषणाध्येषणानिमित्तभावाख्यानाभिनयज्ञानप्राप्तिभेदैः, कुर्वन्तं प्रयुङ्क्ते कारयति, न्यादिवर्जनात्पूर्वविकारबाधको न बाधकस्तेन अचीकरत्, प्रेषणविशिष्टे कर्त्तरि पञ्चमी, स्मारयति असस्मरत्। ३-४-१९ भूङः प्राप्तौ णिङ्, भावयते, ङित्वादात्, णिङभावेऽप्यात्, प्राप्तावपि परस्मै इतिच, भ्वस्त्योरेकतरेण सिद्धावुभयोपादानात् कर्मणि भावयामाहे, भवते प्राप्नोतीति सत्तायामपि, णौ सर्वं कार्यं स्थानिवदिति ४-१-६०ओर्जान्तस्थापवर्गेऽवर्णे पूर्वस्यैः सनि, अबीभवत् अजीजवत् अयीयवत्, ओण ऋदित्करणात्प्राग् द्वित्वात् ह्रस्वः, तेन अटिटत् मा। ४-१-६१ श्रुस्रुद्रुप्रुप्लुच्योर्वा इः, अशिश्रवत् अशुश्रवत्, अशशासत्, आशासेः आशीशसत्, न ह्रस्वोऽपि। ४-२-२० पाशाछासावेव्याह्वो योऽन्तो णौ, ह्वाययति। दरिद्रयति, दरिद्रापयत्यपि, स्मृद्रित्यादिवचनात् अनेकवर्णव्यवधानेऽपि। ४-१-८८ णौ ङसनि ह्वः ख्वृत्, अजूहवत् अजुहावत्,

यो ण्यन्यान्तरे ग्वृच्च न। ४-१-८९ श्वेर्वा, अशूशवत् अशिश्वयत् आर्चिचत् अतत्वरत्। ४-१-६६ वा वेष्टचेष्टः पूर्वस्यात्, अववेष्टत् अविवेष्टत्। ४-४-१०२ रभोऽपरोक्षाशवि स्वरे नोऽन्तः स्वरात्, रंभयति अररंभत्। ४-४-१०३ लभः, अललम्भत्, अबीभसत् अबभासत् अचीकणत् अचकाणत् असूषुपत्। ४-२-१० णौ क्रीजीङः आः। ४-२-२१ अर्त्तिरीव्लीह्रीक्नूयिक्ष्माय्यातां पुः णौ, आदेशादागम इत्यर्पयति, क्नोपयति-क्नापयति, प्रिय प्रापयति, बहुत्वान्नाम्नोऽपि अर्थापयति। ४-४-२७ णौ सन्ङे वा इङो गाः, अध्यजीगपत् अध्यापयति अध्यापीपत्। ४-२-३९ तिष्ठतेरिः, अतिष्ठिपत्। ४-२-३८ जिघ्रतेरिर्वोपान्त्यस्य णौ ङे, अजिघ्रिपत् अजिघ्रपत्। ४-२-१७ पातेः लो णौ, पालयति अपीपलत्। ४-२-१९ वो विधूनने जः, वाजयति। ४-२-१५ लियो नोऽन्तः स्नेहद्रवे वा, लीनयति लाययति वा। ४-२-१६ लो लः स्नेहद्रवे, लालयति-लाययति वा। ३-३-८९ प्रलम्भे गृधिवञ्चेः णेरात्मने, गर्धयते, चौरादिक द्वक्वेरिति। ३-३-९० लीङ्लीनोऽर्चाभिभवे चाच्चाकर्त्तर्यपि आत्मने प्रलंभे च, आलापयते। ३-३-९१ स्मिङः प्रयोक्तुः स्वार्थे (कर्त्तरि हेतौ), विस्मापयते। ३-३-९२ बिभेतेर्भीष् च, भीषयते भापयते वा मुण्डः। ४-२-११ सिध्यतेरज्ञाने आः, साधयति। ४-२-२२ स्फायः स्फाव्, स्फावयति, स्फाययत्यपि। ४-२-२३ शादिरगतौ शात्। ४-२-१४ रुहः पः वा, रोपयति रोहयति। ४-२-१३ वियः प्रजने आ वा, वापयति वाययति वा गाः। ४-२-४० ऊदुदुषो णौ, दूषयति अदूदुषत्, अदुदुषदपि। ४-२-४१ चित्ते वा, दोषयति दूषयति वा प्रज्ञां, धातोः स्वरूपग्रहणे तत्प्रत्ययकार्यविज्ञानमिति दुषमाचष्टे दुषयति। ४-२-५१ णौ मृगरमणे रञ्जेर्नो लुक्, रजयति मृगं, सर्वत्रापि नो लुगिति। ४-२-१२ चिस्फुरोर्नवाऽऽः। ४-२-२४ घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे णौ, घटयति,

हीडं हीडमित्यर्थं दीर्घता। ४-२-२५ कगेवनूजनैजृष्क्नस्रंजः, कगयति, स्नसूरपि। ४-२-२६ अमोऽकम्यमिचमः, रमयति, कामयति। ४-२-२७ पर्यपात् स्खदः, परिस्खदयति, व्यत्ययः अवादपि च। ४-२-२८ शमोऽदर्शने णौ ह्रस्वः जिणम्परे वा दीर्घः, व्यत्ययोऽपि। ४-२-३२ ज्वलह्वलह्मलग्लास्नावनूवमनमोऽनुपसर्गस्य वा ह्रस्वः, नामयति नमयति, चाहयति। ४-३-५० ञ्णिति घात् हनः, घातयति। ४-४-२४ णावज्ञाने गमुः इणिकोः, गमयति। पाययति। ४-१-३३ ङे पिबः पीप्य्, अपीप्यत्, अदिध्मपत् अभिसावयति व्यतस्तम्भत् व्यषिष्वणत् प्रत्यसीषदत् प्रत्यषष्वञ्जत् पर्याणिणत् पर्यानिनत्, उपान्त्येत्यत्र णिजातेः अचूचुरत्, जापयति ग्लपयति औणिणत् अचिकीर्षत् अचकर्षत् जागरयति अजजागरत् अजीहयत् स्वरव्यंजनसमुदायव्यवायः अदीदशत् ॥ इति णिगन्ताः ॥

३-४-२१ तुमर्हादिच्छायां सन्नतत्सनः, भवितुमिच्छति ४-३-३३ नामिनोऽनिट् सन् कित्। ४ ४-५९ ग्रहगुहश्च सनो नादिरिट्, चादोः, बुभूषति, जुगूहिषन्निति। ४ १-१० पुनरेकेषाम्, सुसोषुपिषते। ३-३-७४ प्राग्वत् सन आत्मने। ४-१-११ यि सन्वेर्ष्यः द्विः, ईर्ष्यियिषति ईर्ष्यिषिषति। ४-३-३२ रुदविदमुषग्रहस्वपप्रच्छः सन् च कित्, चात् क्त्वा। ४ ३-३४ उपान्त्ये नामिन्यनिट् सन्कित्, जिघृक्षति। सुष्वापयिषति, क्त्वात् सुषुप्सति। ४-४-४८ ऋस्मिपूङञ्जशौकृगृदृधृप्रच्छः सन् आदिरिट्, पिपविषते चिकरिषति चिकरीषति नास्येटो दीर्घ इति, कृणातेर्न, इटः कार्यित्वान्न स्वरादित्वं सनः, गुणश्च स्वरविधित्वात्प्राग्द्वित्वात् अरिरिषति। ३-३-७२ स्मृदृशः सन आत्, सुस्मूर्षते सिस्मारयिषति दिदृक्षते। ४-१-१०४ स्वरहन्गमोः सनि धुटि दीर्घः, जिघांसति, नेको गमोरिति। ४-१-१०५ तनो वा। ४-४-४७ इवृधभ्रस्जदम्भश्रियूर्णुभरज्ञपिसनि-

तनिपतिवृद्दरिद्रः सन आदिरिड् वा, तितांसति तितंसति तितनिषति जिगीषति चिकीषति चिचीषति। ४-४-२५ सनीङश्च गमुरज्ञाने चादिणिकोः, अधिजिगांसते जिगमिषति अधिजिगापयिषति। ४-२-६१ सनि सन आः, सिषासति पुस्फारयिषति तुष्ठ्यूपति टुष्ठ्यूषति तिरितीकार उच्चारार्थः, तितरिषति तितरीषति तितीर्षति दुद्युपति दिदेविषति। ४-१-१७ ऋध इर्त्त् सि सनि नच द्विः, इर्त्सति अर्दिधिपति विभ्रक्षति विभर्क्षति सेटावपि। ४-१-१८ दंभो धिप् धीप् सि सनि। ४-१-१६ ज्ञप्यापो ज्ञीपीप् नच द्विः सि सनि, ज्ञीप्सति जिज्ञपयिषति, युयूषति यियविषति प्रोर्णुनुविषति प्रोर्णुनविषति प्रोर्णुनूषति बिभर्त्तेरपि वेड् गुणोऽपि ततो विभर्षति, भृगस्तु बुभूर्षति। ४-३-२५ वौ व्यञ्जनादेः सन् चाय्व इदुदुपान्त्येऽय्वन्तात् वा सेट् सन् कित्, चात् क्त्वा, दिद्युतिषते दिद्योतिषते। ४-१-२० मिर्मीमादामित्स्वरस्य, मित्सते, मिमासत्यपि, बहुत्वान्न निरनुबंधेति।

४-१-२१ रभलभशकपतपदामिः, शिक्षति। ४-१-२२ राधेर्वधे इः, प्रतिरित्सति। ४-१-१९ अव्याप्यस्य मुचेर्मोग्वा, मोक्षति मुमुक्षते वा चैत्रः। २-३-३७णिस्तोरेवास्वदस्विदसहः षणि सः षः, सिषवयिषति तुष्टूषति, षोपदेशानां णिस्तोरेव षणि षः। २-३-३८ सञ्जेर्वा षणिः षः ण्यन्तस्य। ४-२-६ दीङः सनि वाऽऽत्, दिदासते दिदीषते, जिजावयिषति शिश्वाययिषति शुशावयिषति जुगुप्सिषते विवृत्सति मुमूर्षति अभ्यषिषेणयिषत् परिषिषेविषते दिवादिसिध्यस्य अभिसिषेधिषति प्राणिणिषति अश्विक्षिषते अट्टिटिषते जुहावयिषति सिष्णासति जिघीषति चिकर्त्तिषति चिकृत्सति अरिरीषति अरिरिसति ईषिषिषति सुस्वूर्षति सिस्वरिषति निविविक्षते चिक्रंसते अनुचिकीर्षति उचिच्छिषति, द्विछस्तिरिति उतिच्छिषतीति ॥ इति सान्ताः ॥

३-४-८०व्यञ्जनादेरेकस्वराद् भृशाभीक्ष्ण्ये यङ् वा,

सर्वस्मादपि जाजाग्रीयते। ४-३-१०९ ऋतो रीः च्विवयङ्क्येषु अजजागरीत् अपि चेति ॥ ४-१-४८ आगुणावन्यादेः ( निमुरीरिख्वर्जस्य ), भृशं अभीक्ष्णं वा भवति बोभूयते। ३-४-१० अत्यर्त्तिसूत्रिमूत्रिसूच्यशूर्णोः यङ्, अटाट्यते अरार्यते। ४-३-८० योऽशिति लुक् व्यंजनान्तात्, अरारांचक्रे, बेभेदिता मोमूत्रिषीष्ट, न लाक्षणिकस्येति मोमूत्रयिषीष्ट, ओर्णोनुविष्ट। ३-४-११ गत्यर्थात्कुटिले, चंक्रम्यते। ४-१-५१ मुरतोऽनुनासिकस्य पूर्वस्य, जातिग्रहात् जंहम्म्यते, जाहम्म्यतेऽपि, पूर्वस्यात इति विशेषणे बंभाम्यतेऽपि। ३-४-१२ गृलुपसदचरजपजभदशदहो गर्ह्ये। २-३-१०१ ग्रो यङि रो लः, जेगिल्यते। ४-१-५३ चरफलां पूर्वस्य मुरन्तः, बहुत्वात्फलनिफलौ। ४-१-५४ ति चोपान्त्यातोऽनोदुः चरफलां, पम्फुल्यते चञ्चूर्यते। ४-१-५२ जपजभदहदशभञ्जपशः मुरन्तः, दन्दश्यते पम्पश्यते। ४-३-९७ ईर्व्यञ्जनेऽयपि गापास्थासादामाहाकः क्ङित्यशिति, देदीयते पेपीयते मेमीयते, न सैपैगाङ्मातीनामिति, पातेः पापायते, शोशूयते शेश्वीयते चेक्रीयते वेविध्यते। २-३-६० सिचो यङि न षः, अभिसेसिच्यते। ४-१-४७ न कवतेर्यङः कश्चः, कोकूयते। ३-४-१३ न गृणाशुभरुचः यङ्। ४-१-८६ चायः कीः, चेकीयते, लुबर्थं दीर्घः, प्राक्तु स्वरे इति पश्चाद् द्वित्वं। ४-३-९८ घ्राध्मोर्यङि इः, जेघ्रीयते, जेघ्रीति जेघ्रीत इति। ४-३-९९ हनो घ्नीर्वधे, जेघ्नीयते, वेति जंघनीत्यपि च। ४-१-५० वञ्चस्रंसध्वंसभ्रंशकसपतपदस्कन्दोऽन्तो नीः, वनीवञ्च्यते, सनीस्रस्यते, अद्युतादिस्रंसः सास्रंस्यते अभ्यादिभ्रंशः बाभ्रश्यते। ४-२-६२ ये नवा आः खनिसनिजनः क्ङिति, आशिष्यपि, जाजायते जंजन्यते। ४-१-५५ ऋतां रीः पूर्वस्य, वरीवृश्च्यते, बहुत्वात् लाक्षणिकस्यापि। २-३-९५ नृतेर्यङि न णः, नरीनृत्यते, जरीगृहीता सोषुप्यते। ४-१-८५ व्येस्यमोर्यङि य्वृत्, वेवीयते सेसिम्यते, न लुपीति, वावश्यते।

४-३-१०५क्ङिति यि शय् शीङः, शाशय्यते। ४-४-१०४ आङो यि लभः स्वरान्नोऽन्तः, आलालम्भ्यते। ४-४-१०५ उपात्स्तुतौ, उपलालम्भ्यते दाध्वर्यते वर्भृज्ज्यते तेष्ठीयते निषापद्यते ॥ इति यङन्ताः ॥

३-४- बहुलं लुप् यङः, यङित्यादौ बाहुल्यात् वर्वर्त्ति चर्कर्मि, वावदीति रोरवीति लालपीत्यत्र नित्यं, वर्वर्त्ति नर्नर्त्ति वर्वष्टीत्यत्र च वेति, लुपि नात्मने, अदादौ पाठात् न शव्, प्रकृतिग्रहणे यङ्लुबन्तस्यापीति गुणः बोभोति बोभवीति। ४-३-११ न वृद्धिश्चाविति क्ङिल्लोपे चाद् गुणः, बोभूतः बोभुवति अबोभूवीत् अबोभोत् अबोभवुः बोभवांचकार बोभविता अपास्पर्द् अपास्पाः नानात्ति दादद्धि अदादधुः अदादाधीत् अचोस्कुन् अचोस्कुन्दुः अचोकुर्दीत् अचोकूः जंगन्ति जंगतः जंगमति जंगन्मि जंगहि अजंगमीत् जंघन्ति जहिजंघहिरपि, सूत्रगणनिर्देशेऽपि नेति, न यमीत्यादि, अहन्निति दीर्घत्वे च जघांहिरपि, वध्यात् चञ्चूर्त्ति

४-२-६० आः खनिसनिजनः धुटि क्ङिति, चङ्खातः अचंखानीत् योयवीति। ४-१-४९ न हाको लुपि यङः आः पूर्वस्य, जहाति जहेति अजहुः अजहासीत् जहायात्, जाहेतीति, सोषुपीति, सास्वप्तीति। ४-१-५६रिरौ च लुकि चाद्रीः ऋमतां, बहुत्वाल्लाक्षणिकस्यापि, वर्वृतीति वरिवृतीति वर्वर्त्ति अवर्वर्त् अवर्वाः अवर्वर्त्तीत् चरीकर्त्ति चर्कर्त्ति चरिकर्त्ति तातीर्तः अरियरीति अरार्त्ति अरियर्त्ति नेः पूर्वस्येति अर्यर्ति अपि अररीति अरियृतः आरति अरियूति आरारीत् आरियारीत् आरियात् अरियृयात् जर्गृहीति जाग्रहीति जाग्राढि जागृहति जर्गृधीति वरीवृश्चीति वरिवृष्टि चाकरीति चाकार्त्ति पाप्रष्टि पाप्रष्टः पाप्रच्छ्वः पाप्रश्मः जाहयीति जाहति। ४ १-१०९ मव्यविश्रिविज्वरित्वरेरुपान्त्येन सह ऊट् अनुनासिके क्वौ धुटि च, मामोति मामवीति मामवति। ४-१-११० राल्लुक् अनुनासिकाक्विधुटि छ्वोः, तोतोर्त्ति तोतूर्तः तोतुर्वति मोमोर्ति। ४-१-१०७अहन्प-

श्रमस्य क्विङ्किति धुटि दीर्घः, शंशान्तः, अभिषिषेधीति सेधोऽकार उच्चारणार्थः, परिसेषिवीति अभिसास्यन्दीति प्रनिवावपीति प्रणिमामाति संजगते, दंदशीति दशेत्युक्तेः, असासक् देहि शाधि एधि, हसेः अजाहासीत्, श्व्यादीनामनेदित्करणात्, योयोतीति, जागेयात् पापेयात् तास्थेयात् आस्थत् चोकोति बाभ्राष्टि बाभ्राक्ति अपापयत् ङे पिब इति लुप्ततिव् तिवेत्यनित्यस्तद् अपापात् पर्पर्ति पर्परीति वेवेद्धि पेपेति देद्योति, देदेतीति लेलेतीति, भृणोति चरीकृणोति देधिनोति प्रोर्णोनोति प्रोर्णोनौतीति च, सरिस्वरिता, सरिस्रष्टः न ङित्यदन्त इति, इस्करणात् शाशिष्टः, मर्मर्ति, मुहादिपरिगणनात् मोमोग्धि मोमोढि अतास्थपत् ॥ इति यङ्लुबन्ताः ॥

३-४-२३ द्वितीयायाः काम्य इच्छायां वा, इदंकाम्यति स्वःकाम्यति । ३-४-२३ अमाव्ययात्क्यन् च, गोसमाननान्तेभ्य इति, पुत्रमिच्छति । ४-३-११२क्यनि अवर्णस्येः, पुत्रीयति पुत्रकाम्यति । १-१-२२ नं क्ये, नाम पदं, क्येष्विति बहुत्वादनेकानुबन्धेऽपि दंडीयति, एकानुबन्धग्रहणे न द्व्यनुबन्धकस्येति क्यन्यव् गव्यति, राजीयति राजीयांचकार दिव्यति दीव्यति कर्त्रीयति । २-४-९१ आपत्यस्य क्यच्व्योः व्यञ्जनाद्यो लुक्, गार्गीयति । ४-३-८१ क्यो वाऽशिति व्यञ्जनाल्लुक्, समिधिता समिध्यिता उदच्यति आ ऊढा ओढा तामैच्छत् औढीयत् औंकारीयत् । ४-३-११३ क्षुत्तृड्गर्धेऽशनायोदन्यधनायम्, उदन्यति । ४-३-११४वृषाश्वान्मैथुने स्सोऽन्तः, वृषस्यति, मैथुनपर्यायौ । ४-३-११५ अश्व लौल्ये चात् स्सोऽन्तः, दध्यस्यति दधिस्यति, द्विस्स् षत्वाभावाय, सर्पिष्काम्येत् ।३-४-२४आधाराच्चोपमानादाचारे चाद् द्वितीयायाः,पुत्रमिवाचरति पुत्रीयति शिष्यं, प्रासादीयति कुट्यां, अमाव्ययादेव ।३-४-२५ कर्तुः क्विप् गल्भक्लीबहोडात्तु ङित् उपमाना-

दाचारे, राजनति क्विपि व्यञ्जनकार्यमनित्यं होडते शिष्यति, क्यपो लुकि शिषितेति, कर्त्तुः संबंधिनो म इति, अगवीत् । प्रत्ययान्तैकस्वरेऽप्याम् गवांचकार । ३-४-२६ क्यङ् कर्त्तुरुपमानात्, हंसायते कायांचक्रे दध्यच्यते । ३-४-२७ सो वा लुक्च, पयायते पयस्यते । ३-४-२८ ओजोऽप्सरसः सो लुक्, ओजस्वीवाचरति ओजोयते अप्सरायते, त्वद्यते, कुमारायते पुंवत्, सपत्नीयते पाचिकायते अति औ कवयाति अमालासीत् कति चकौ स्विष्यति । ३-४-२९ च्व्यर्थे भृशादेः स्तोर्लुक् प्रागतत्तत्त्वे कर्तुः क्यङ्, उत्सुकशीघ्रचपलपंडितफेनशुचिनीलहरितमंदभद्रवर्चस्उन्मनस्दुर्मनस्तृपत्रेफत्वेहतः, वेहायते उदमनायत दुर्मनायते । ३-४-३० डाच् लोहितादिभ्यः षित् क्यङ् च्व्यर्थे, जिह्मश्यामधूमचर्मनूहर्षगर्वसुखदुःखमूर्च्छानिद्राकृपाः, अकरुणावान् करुणावान् भवति करुणायति करुणायते । ३-३-४३ क्यङ्षो नवाऽऽत्मने, पटपटायते, डाज् लोहितादेव क्यङ्ष् इत्यपि । ३-४-३१ कष्टकक्षकृच्छ्रसत्रगहनाय पापे क्रमणे चतुर्थ्यन्तेभ्यः क्यङ्, कृच्छ्रायते, द्वितीयायाः पापचिकीर्षायामिति । ३-४-३२ रोमन्थादु व्याप्यादुच्चर्वणे, रोमन्थायते । ३-४-३३ फेनोष्मबाष्पधूमादुद्वमने, धूमायते । ३-४-३४ सुखादेरनुभवे, दुःखायते, तृप्रकृच्छ्रअलीककृपणकरणप्रतीपाः । ३-४-३५ शब्दादेः कृतौ वा, वैरायते वैरयति, व्यवस्थार्थो वा, कलहओघवेगयुद्धगममेघअब्याप्लुष्टासुदिनदुर्दिननीहाराः । ३-४ ३६ तपसः क्यन्, तपस्यति । ३-४-३७नमोवरिवश्चित्रङोऽर्चासेवाश्चर्ये, नमस्यति चित्रीयते । ३-४-३८ अंगान्निरसने णिङ्, ग्रीवयते । ३-४-३९ पुच्छादुत्परिव्यसने, परिपुच्छयते, पुच्छयते उत्पुच्छयते । ३-४-४० भाण्डात्समाचितौ, संभाण्डयते परिभाण्डयते । ३-४-४१ चीवरात्परिधानार्जने, परिचीवरयते । ३-४-४२ णिज्बहुलं नाम्नः कृगादिषु ७-४-४४ त्र्यन्त्यस्वरादेः लुक् इमणीष्ठियसौ, वास्या

परिच्छिन्नवान् पर्यवीवसत् कलिहलिवर्जनात्पश्चाल्लोपेऽसमानलोपिता, तिलकयति त्रिलोकीं पटयति अपीपटत्, धातोरित्यपपटदिति, ।७-४-४२स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्यान्तः स्थादेर्लुक् गुणश्च नामिनः, दवयति स्थवयति अनुलोमयति उपश्लोकयति त्वदयति, त्वापयतीति, तिराययति स्वापमकरोत् असुषुपदिति घञोऽपि य्वृत्, समीचयति अदिदेवद्रायत् स्रजयति प्रशस्ययतीति।७-४ ३६ प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृद्धवृन्दारकस्येमनि च प्रास्थास्फावरगरबंहत्रपद्राघवर्षवृन्दं, चात् ण्यादौ, बंहयति वृंदयति द्रघ्ययति । ३-४-४३ व्रताद् भुजितन्निवृत्त्योः, व्रतयति सावद्यं शुद्धं वा । ३-४-४४ सत्यार्थवेदस्याः, सत्यापयति अससत्यापत् । व्यसीसनत्, नात्राटान्तरे, अभिषेणयति अभिसावकीयति । ३-४-४५ श्वेताश्वा १ श्वतर २ गालोडिता ३-ऽऽह्वरक ४ स्याश्व १ तरे २ त ३ क ४ लुक्, श्वेतयति। ४-१-७ नाम्नो द्वितीयाद्यथेष्टं द्विः स्वरादेः, अश्वीयियिषति। ४-१-८ अन्यस्य प्रथमादिः, पुपुत्रीयिषति ॥ इति नामधातुप्रक्रिया ॥

कण्डूग् गात्रविनामे । ३-४-८ धातोः कण्ड्वादेर्यक्, अधिकारेऽपि धातुग्रहान्न कण्ड्वादिनामभ्यः, कण्डूयति कण्डूयते, महीङ् पूजायाम्, वृद्धावपि । हृणीङ् रोषे लज्जायां च, अवयवे कृतं लिङ्गं समुदायमपि विशिनष्टि चेत्तं समुदायं सोऽवयवो न व्यभिचरति हृणीयते। वेङ् लाङ् मन्तु अपराधे । वल्गु माधुर्ये, पूजायामपि। असू असु उपतापे । वेट् लाट जीवने, धौर्त्यास्वप्नपूर्वभावेष्वपि । लिट अल्पकुत्सनयोः । लोट् धौर्त्येऽस्वप्ने च, दीप्तावपि । उरस् बले। उषस् प्रभातीभावे । इरस् ईर्ष्यायां । तिरस् अन्तर्धौ । संभूयस् इमस् एयस् प्रसूतौ । पुष संतोषे । पयस् प्रसवे । संभूयस् प्रभूतभावे । दुवस् परितापपरिचरणयोः । दुरज् भिषज् चिकित्सायां । भिष्णुक् उपसेवायां। नन्द समृद्धौ। रेखा श्लाघाऽऽसादनयोः । लेखा स्खलने । एला केला खेला विलासे । वेला समयार्थे । गोधा मेधा आशुग्रहणे । मगध परिवेष्टने । इरध

इषुध शरधारणे । कुषुंभ क्षेपे । सुख दुःख तत्क्रियायां । अगद नीरोगत्वे । गद्गद वाक्स्खलने, ङिदिति । तरण वरण गतौ । उरण् तुरण त्वरायां । पुरण भुरण धारणपोषणयोः । चुरण चौर्ये । तिरस् तरण गतौ । तंतस् पंपस् दुःखे । अरर आराकर्मणि । सपर पूजायां । समर संग्रामे । ४-१-९ कण्ड्वादेस्तृतीयोऽशौ ङ्रि:, कण्डूयियिषति । वेद धौर्त्ये स्वप्ने च । इला विलासे
॥ इति कण्ड्वादयः ॥

। ३-३-२३ क्रियाव्यतिहारे (इतरचिकीर्षितायामितरेण हरणं)-ऽगतिहिंसाशब्दार्थहसो ह्वहश्चानन्योऽन्यार्थे कर्त्तर्यात्मने, व्यतिपुनते व्यतिहरन्ते भारं व्यतिस्ते व्यतिहे व्यतिषीत । ३-३-२४ निविशः कर्त्तर्यात्, न्यविशत, पर्युहते । ३-३-२६ उत्स्वराद्युजेरयज्ञतत्पात्रे (यज्ञे यत् तत्पात्रं तद्विषयः) उद्युंक्ते नियुंक्ते । ३-३-२७ परिव्यवात् क्रियः; विक्रीणीते, ईगितः फलवतोऽन्यत्रायं विधिः सर्वत्र । ३-३-२८परावेर्जेः, विजयते । ३-३-२९ सम्मः क्ष्णोः, संक्ष्णुते । ३-३-३१ उदश्चरः साप्यात्, गुरुवचनमुच्चरते । ३-३-३२ समस्तृतीयया, यस्य येनाभिसंबन्धो दूरस्थस्यापि तेन स इति रथेन मैत्रः संचरते । ३-३-३३ क्रीडोऽकूजने, संक्रीडते । ३-३-३४ अन्वाङ्परेः । ३-३-३५ शप उपलम्भने (प्रकाशनं शपथः प्रोषितानुरूपा चेष्टा वा) । ३-३-३७ भुनजोऽत्राणे, ओदनं भुंक्ते । ३-३-३८ ह्रगो गतताच्छील्ये, पैतृकमनुहरन्तेऽश्वाः ( सादृश्यं गमनं वा ) । ३-३-३९ पूजाचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये नियः, नयते स्याद्वादे जीवादीन्, उपनयते माणवकं, कर्मकरानुपनयते, शिशुमुदानयते, नयते तत्त्वार्थे, नयते ऋणं, शतं विनयते । ३-३-४० कर्त्तृस्थामूर्त्ताप्यात्, विनयते क्रोधं, शमयत्यर्थादेव । ३-३-४८ वृत्ति (अप्रतिबन्धः) सर्गं (उत्साह) तायने (स्फीततादि) क्रमः; शास्त्रेऽस्य क्रमते बुद्धिः, सूत्राय क्रमते, क्रमन्तेऽस्मिन् योगाः, अपरोपोपसर्गादपीति । ३-३-४९ परोपात् वृत्त्यादौ, अवृत्त्यादावपि-

। ३-३-५० वेः स्वार्थे। ३-३ ५१ प्रोपादारम्भे, स्वार्थारम्भे, अङ्गीकरणेऽपि च। ३-३-५२ आङो ज्योतिरुद्गमे,आक्रमते सूर्यः। ३-३-५३ दागोऽस्वास्यप्रसारविकासे, विद्यामादत्ते, उष्ट्रो मुखं व्याददाति, कूलं व्याददाति। ३-३-५४ नुप्रच्छः, आनुते शृगालः, उत्कण्ठाशब्दे आपृच्छते। ३ ३-५५ गमेः क्षान्तौ (कालहरणं), आगमयस्व, ण्यन्त एव। ३ ३-५६ ह्वः स्पर्द्धे आङः, वादिनमाह्वयते। ३-३-५७ संनिवेः, निह्वयते। ३-३-५८उपात्, उपह्वयते। ३-३-५९ यमः स्वीकारे, विवाह एवेति। ४-३-४० वा स्वीकृतौ यमेः सिजनिट् कित्, उपायत उपायंस्त वा महास्त्राणि। ३-३-६०देवार्चा मैत्रीसंगमपथिकर्तृकमंत्रकरणे स्थः उपात्, जिनेन्द्रमुपतिष्ठते, सुघ्नमुपतिष्ठते पन्थाः, ऐंकारेण वाणीमुपास्थित। ३-३-६१ वा लिप्सायां, उपतिष्ठते उपतिष्ठति वा साधुर्गृहिकुलं। ३-३-६२ उदोऽनूर्ध्वेहे (चेष्टा), नञ्युक्तं तत्सदृशे, मुक्तावुत्तिष्ठते। ३-३-६३ संविप्रावात्, प्रतिष्ठते। ३-३-६४ ज्ञीप्साऽऽस्थेये (निर्णेता) तिष्ठन्ते सिंहाचार्या वज्रर्षये, संशय्याभये तिष्ठते श्रेणिकः। ३-३-६५ प्रतिज्ञायां आङ्पूर्वः, आतिष्ठते नित्यानित्यं। ३-३-६६ समो गिरः प्रतिज्ञायां, संगिरते स्याद्वादं। ३-३-६७ अवात् गिरः, न प्रयोग इति। ३-३-६८ निह्नवे ज्ञः, शतमपजानीते। ३-३-६९ संप्रतेरस्मृतौ (अभ्युपगमादौ)। ३-३-७० अननोः सनः, धर्मं जिज्ञासते,सकर्मकात्। ३-३-७१ श्रुवोऽनाङ्प्रतेः, शुश्रूषते गुरून्। ३-३-७२ शको जिज्ञासायां, शिक्षते, शकः सनेऽनित्त्वमिति। ३-३-८१ अनोः कर्मण्यसति वदो व्यक्तवाचाम्, अनुवदते मैत्रश्चैत्रस्य। ३-३-८२ ज्ञः, सर्पिषो जानीते, प्रवृत्तौ करणे मिथ्याज्ञाने वा ज्ञाने सम्बन्धे वा षष्ठी। ३-३-८३ उपात्स्थः, भोजनकाल उपतिष्ठते। ४-३-३७ गमो वाऽऽत्मने पदेऽनिट्सिजाशिषौ कित्, समगत समगंस्त संगसीष्ट संगंसीष्ट, उपसर्गेत्यनित्यस्तेन समागच्छत्। ३-३-८६ आङो यमहनः स्वेऽङ्गे च, आहते प्राहणवहे प्राहन्महे

आयच्छते पादं, स्वेऽङ्गे इति पारिभाषिकं नात्र स्वाङ्गं। ४-३-३८ हनः सिच् अनिट् कित्, अ हत। ४९-३ ३९ यमः सूचने, आयत ।३-३ ८७व्युदस्तपः स्वेऽङ्गेऽसति च कर्मणि, वितपते रविः, उत्तपते पाणिं, दीपिज्वलिरुचिभासर्थोऽकर्मकस्तपिः। ३-३-८८ अणिक्कर्मणिकर्त्तृकाण्णिगोऽस्मृतौ, आरोहयते हस्ती हस्तिपकान्, दर्शयते अदीदृशत अददर्शत वा भृत्यान् राजा। ३-३-९३ मिथ्याकृगोऽभ्यासेऽर्थे, पदं मिथ्या कारयते। ३-३-९४ परिमुहायमायसपाद्धेवद्वसदमादरुचनृतः फलवति कर्त्तरि णिगः, आयामयते सर्पं, आयासयते मैत्रं, अदेर्नेति। ३-३-९६ ज्ञोऽनुपसर्गात्। ३-३-९७ वदोऽपात्, एकान्तमपवदते। ३-३-९८ समुदाङो यमेरग्रंथे फलवति कर्त्तर्यात्मनेपदं, आयच्छते वस्त्रं ।३-३-९९ पदान्तरगम्ये वा परिमुहादे १ रीगितः २ ज्ञोऽनुपसर्गात् ३ वदोऽपात् ४ समुदाङो यमेः ५ इति विहितमात्मनेपदं, स्वं शत्रुं जानाति जानीते वा। इत्यात्मनेपदप्रक्रिया॥

परानोः कृगः परस्मै। ३-३-१०२ प्रत्यभ्यतेः क्षिपः, अतिक्षिपति, विधिनियमयोर्विधिरेव ज्यायांस्तेन तौदादिकः। ३-३-१०३ प्राद्वहः। ३-३-१०४ परेर्मृषश्च, परिवहति, वहेर्नेति। ३-३-१०७ अणिगि प्राणिकर्त्तृकानाप्याण्णिगः, आसयति चैत्रं, चेतयमानं प्रयुंक्ते चेतयति। ३-३-१०८ चल्याहारार्थेङ्बुधयुधप्रुद्रुस्रुनशजनः णिगः, अध्यापयति शिष्यं॥ इति परस्मैपदप्रक्रिया॥ ३--४--७० क्यः शिति भावकर्मणोः। ३--३--२१ तत्साप्यानाप्यात्कर्मभावे कृत्यक्तखलर्थाश्च आत्मनेपदं, भूयते लिख्यते क्रियते घटः, कालादेः मास आस्यते मासमास्यते, भावे औत्सर्गिकं प्रथमपुरुषैकवचनं, सकर्मकाकर्मकत्वं द्रव्यकर्मनिबन्धनं, क्रियाविशेषणस्य क्रियया कर्मत्वेऽपि बाह्यक्रियाकर्मत्वाभावान्न तत्, अदुतौ कर्त्तर्येवेति बुभूवे, बभूवेऽपि। ३-४-६९ स्वरग्रहदृशहन्भ्यः स्यसिजाशीःश्वस्तन्यां ञिड्वा,

भाविता भविता। ३-४-५८ भावकर्मणोः अद्यतन्यां ञिच् तलु-
क् च, अभावि भावयामाहे, न परोक्षेति ह इति, भावयिष्यते,
बुभूर्ष्यते, आश्लेषि कन्या, बोभूय्यते स्तूयते अस्ताविर्द्व अस्ता-
विध्वम्, स्मर्यते जिनः, अस्मारिषाताम् अस्मरिषाताँ अस्मृषातम्,
औपदेशिकसंयोगाभावात् संस्क्रियते शिष्यः। ४-२-६३
तनः क्ये वाऽऽः, तायते तन्यते अतानिषत, इज्यन्ते
गुरवः, शय्यते जायते जन्यते धीयते। ४-३-५३ आत
ऐः कृञ्वौ ञ्णिति, अधायि अधायिषाताम् अदरिद्रि अदरि-
द्रायि तप्यते।३-४-९१ तपः कर्त्रनुतापे च ञिच् न, चात्क-
र्मकर्त्तरि, अनुतापग्रहणात् भावे कर्मणि च अन्वतप्त तेपे, दीयते
दायिषीष्ट हन्यते, वधिषीष्ट अनेकस्वरादिट्, अघानि, अड इत्यनेन
सिद्धेऽपि ञिणवीत्युक्तेन घात् अवधि, घानिता हन्ता, गृह्यते
अदर्शिषाताम् अदृक्षाताम् अदृक्षत शम्यते। ४-३-५५ मोऽकमि-

यमिरमिनमिगामिवमाचमः ञ्णिति कृति औ च न वृद्धिः,
चम इति, आर्मस्तु अभणः, अशामि अकामि। ४-३-५६ विश्रमेर्वा,
न्यश्रामि न्यश्रमि, निषेधः नित्यं घञि वेति च, शाम्यते शंशम्यते
भज्यते। ४-२-४८ भञ्जेञौ वा नः लुक्, अभाजि अभञ्जि,
पायते। ४-४-१०६ ञिख्णमोर्वा लभः स्वरान्नोऽन्तः, अलाभि
अलम्भि गीयते, गाङो गायतेऽपि, घस्रादित्वात् अक्षाञ्जि
अक्षञ्जि, हाङो हायते॥ इति भावकर्मप्रक्रिया॥

सौकर्यादविवक्षिते कर्तृव्यापारे ३-४-८६ एकधातौ
कर्मक्रिययैकाकर्मक्रिये (कर्मकर्त्तरिरूपे) ञिक्यात्मनेपदानि,
क्रियते अकारि चक्रे वा कटः स्वयमेव, भावे क्रियते कटेन।
३-४-८७ पचिदुहेः कर्मक्रिययैकाक्रिये एकधातौ, अपक्त उदुम्बरः
फलं स्वयं। ६-४-८८ न कर्मणा ञिच् योगे, अदुग्ध गौः पयः
स्वयम् कर्त्तरीत्यव अपाचि उदुम्बरफलं वायुना। ३-४-८९

रुधः न ञिच्, अरुद्ध गौः स्वयं। ३-४-९० स्वरदुहो वा ञिच्, अकृताकारि वा कटः स्वयं, अदुग्धादोहि वा गौः स्वयम्। ३-४-९२ णिस्नुश्र्यात्मनेपदाकर्मकात् ञिच् न, पचन्तं प्रायुङ्क्तापीपचत्, सौकर्येऽपीपचतौदनः स्वयं, व्यकृत सैन्धवः, ञिट् विकारिता, ग्रास्नाविष्ट (असत्कर्माऽऽत्मनेपदात्)। ३-४-९३ भूषार्थसन्किरादिभ्यश्च ञिक्यौ न, चाद् ण्यन्तादेर्न क्यः, अलमकृत कन्या, अचिकीर्षिष्ट कटः, कीर्षिष्ट पांसुः स्वयं, न्यगीर्ष्ट ग्रासः, कृगॄदुहब्रूग्रन्थग्रन्थाः। ३-४-९४ करणक्रियया क्वचित् एकाकर्मक्रिये, परिवारयन्ते वृक्षं कण्टकाः स्वयं। ३-४-८४ सृजः श्राद्धे ञिक्यात्मने तथा कर्त्तरि, सृज्यतेऽसर्जि संद्यते वा मालां धार्मिकः। ३-४-८५ तपेस्तपःकर्मकात्॥ इति कर्मकर्तृप्रक्रिया॥

५-२-५ विशेषाविपक्षान्याभिश्रे भूतेऽद्यतनी, अजैषीद्वर्तो हूणान्, अद्य श्वो वाऽभुक्ष्महि। ५-२-६ रात्रौ वसोऽन्त्ययामास्वप्तर्यद्यतनी भूते, क्व भवानुषितः ?, अमुत्रावात्सम्। ५-२-८ ख्याते दृश्ये भूतेऽनद्यतने ह्यस्तनी, अरुणत् सिद्धराजोऽवन्तीम्, अजयत् सौराष्ट्रान् सिद्धः। ५-२-९ अयदि स्मृत्यर्थे भविष्यन्ती भूतानद्यतने, स्मरसि साधो ! स्वर्गे स्थास्यावः, त्वादिष्वन्योऽन्यं नासरूपोत्सर्गविधिरित्यनद्येति न। ५-२-१० वाऽऽकांक्षायाम्, काश्मीरेषु वत्स्यामोऽवसाम वा। ५-१-११ कृतास्मरणा १ तिनिह्नवे २ परोक्षा भूतानद्यतने, नाहं कलिङ्गान् गाम। ५-२-१३ ह १ शश्व २ द्युगान्तःप्रच्छ्ये ३ ह्यस्तनी च भूतानद्यतने; अगच्छत्-जगाम वा किं?, स्मरसि इतिहाध्यैमहि, अयदिबाधनार्थं ह्यस्तनी। ५-२-१४ अविवक्षिते परोक्षे ह्यस्तनी, अहन् कंसं। ५-२-१५ वाऽद्यतनी पुरादौ भूतानद्यतने, अवात्सुरवसन्नूषुर्वा इतिह पुरा छात्राः, न परोक्ष इति, स्मृत्यर्थादियोगे नाद्यतनी, आदिना यथालक्ष्यं। ५-२-१६ स्मे च वर्त्तमाना, तदा वसन्ति, पृच्छति स्म, चात् पुरादौ। ५-२-१७ ननौ

पृष्टोक्तौ सद्वत् भूते, कटमकार्षीः ?, ननु करोमि, वद्वचनात् शत्रानशौ। ५-२-१८नन्वोर्वा, अकार्षीः?, न करोमि नु करोमि अकार्षं वा। ५-३-६ परिदेवने वत्स्र्यति श्वस्तनी, कदाऽध्येता योऽनभिनियुक्तः? । ५-३-७ पुरायावतोर्वर्तमाना, पुरा भुंक्ते, भविष्यदनद्यतने पुरा श्वो भुंक्ते। ५-३-८ कदाकर्ह्योर्नवा, कदा भुंक्ते भोच्यते भोक्ता वा ? । ५-३-९ किंवृत्ते लिप्सायाम्, विभक्तिडतरडतमान्तः किंशब्दः किंवृत्तं, कतमो ददाति दाता दास्यति वा ?। ५-३-१०लिप्स्यसिद्धौ वा वर्त्तमाना, भिक्षां ददाति ३ स स्वर्गं याति ३ । ५-३-११ पञ्चम्यर्थहेतौ वा, आगच्छति ३ सूरिरनुयोगमादत्स्व । ५-३-१२ सप्तमी चोर्ध्वमौहूर्त्तिके, ऊर्ध्वं मुहूर्ताच्चेदागच्छेत् ४ गुरुस्तर्कमधीष्व।५-४-१ सत्सामीप्ये सद्वद्वा भूते वत्स्र्यति च, आगच्छामि, विशेषेण साम्याय वत् । ५-४-२ भूतवच्चाशंस्ये वा, उपाध्यायश्चेदागत आगच्छति आगमिष्यति आगन्ता वा तर्कमध्यगीष्महि अधीमहे अध्येष्यामहेऽध्येतास्महे, सामान्यातिदेशे विशेषस्य नातिदेशस्तन्न ह्यस्तनीपरोक्षे । ५-४-३ क्षिप्राशंसार्थयोर्भविष्यन्तीसप्तम्यौ आशंस्ये, उपाध्यायश्चेदागच्छति आगमदागमिष्यत्यागन्ता वा क्षिप्रमाशु त्वरितमरं शीघ्रमेते तर्कमध्येष्यामहे, आशंसेऽवकल्पये संभावये युक्तोऽधीयीय, द्वियोगे सप्तमी । ५-४-४ संभावने ( हेतोः शक्तिश्रद्धानं ) सिद्धवत् असिद्धेऽपि । ५-४-५ नानद्यतनः प्रबन्धासत्त्योः, भूते ह्यस्तनी भविष्यति च श्वस्तनी न, यावज्जीवमदात्, आगामिनी या पौर्णमास्येतस्यां प्रवर्तिष्यते जिनमहः, न परोक्षाद्या इति । ५-४-६ एष्यत्यवधौ देशस्यार्वाग्भागे नानद्यतनः, आशत्रुंजयाद्गन्तव्ये वलभ्या अवरे द्विरोदनं भोक्ष्यामहे । ५-४-७ कालस्यानहोरात्राणां अवधौ अवरभागे, आगामिनि वर्षे आग्रहायण्या अवरे दानं दास्यामहे । ५-४-८ परे वा भागे कालस्य, परत्वात्प्रबन्धासत्त्योः । ५-४-११ वोतात्प्राक् भूते

क्रियातिपत्तौ(सप्तम्यर्थे क्रियातिपत्तिः)कथं अनागाढे आधाय कृतमसेविष्यत सेवेत वा धिग्गर्हामहे। ५-४-१२ क्षेपेऽपिजात्वे-र्वर्त्तमाना, अपि जन्तून् हिनस्ति धिग्गर्हामहे।५-४-१३कथामि सप्तमी च वा क्षेपे, कथं मांसं भक्षयेत् भक्षयति अभक्षयत् वा? धिगन्याय्यमेतत्, भविष्यति तु अभक्षगिष्यदित्येव। ५-४-१४ किंवृत्ते सप्तमीभविष्यन्त्यौ क्षेपे, कः कतरः कतमो वा अनृतं ब्रूयाद्वक्ष्यति वा?। ५-४-१५ अश्रद्धामर्षेऽन्यत्रापि, किंवृत्तेऽकिंवृत्तेऽपि, न संभावयामि तत्रभवानदत्तं गृह्णीयात् ग्रहीष्यति वा, अश्रद्धामर्षवाचकपदयोगे। ५-४-१६ किंकिलास्त्यर्थयोर्भविष्यन्ती, न श्रद्दधे किं किल विद्यते वा भवान् परदारानुपकरिष्यते?। ५-४-१७ जातुयद्यदायदौ सप्तमी, न क्षमे जातु भवान् सुरां पिवेत् अपास्यद्वा। ५-४-१८क्षेपे च यच्चयत्रे, धिग् यच्च भवान् अस्मानाक्रोशेत्, नावकल्पयामि भवान् परिवादं कथयेत्। ५-४-१९ चित्रे यच्चयत्रयोरुपपदयोः, अद्भुतं यच्च भवानकल्प्यं सेवेत। ५ ४-२० शेषे भविष्यन्त्ययदौ चित्रे, आश्चर्यं वधिरो नाम व्याकरणं श्रोष्यति।५-४-२१सप्तम्युताप्योर्बाढे, अपि कुर्यात्। ५-४-२२ संभावनेऽलमर्थे तदर्थानुक्तौ, अपि स्कन्दकोद्देशं यामेनाधीयीत, दोर्भ्यां समुद्रं तरेत्।५-४-२३ अयदिश्रद्धाधातौ नवा, संभावयामि भुञ्जीत भवान्।५-४-२४ सतीच्छार्थाद् अलमर्थे, अपि संयतः सन्नकल्प्यं सेवितुमिच्छेत्।५-४-२५ वत्स्यति हेतुफले वा सप्तमी, गुरूनुपासीत शास्त्रान्तं गच्छेत्, नेतिशब्दद्योतिते१ सर्वकाले २ भूतेऽपि ३ चेति। ५-४-२६ कामोक्तावकाचिति, अभिलाषो मेऽधीयीय।५-४-११ इच्छार्थे सप्तमीपञ्चम्यौ, वशिम तपस्यतु तपस्येद्वा भवान्, सप्तम्युतेत्यारभ्य केवला या निमित्ते सा क्रियातिपत्तिरिति। ५-४-२९ प्रैषा-(सन्यत्कारा) नुज्ञा (कामचारानुमतिः)ऽवसरे कृत्यपञ्चम्यौ, कार्यः कटः करोतु कटं, यत्सर्वप्रत्ययापवादभूता पञ्चमी, अनुज्ञायां

सप्तमीति । ५-४-३० सप्तमी चोर्ध्वमौहूर्त्तिके, ऊर्ध्वं मुहूर्त्तात् कुर्यात् करोतु करणीयो वा । ५-४-३१ स्मे पञ्चमी प्रैषादौ, उपरि मुहूर्तस्य करोतु स्म कटं । ५-४-३२ अधीष्टौ स्मे, विद्व-न्ननुव्रतानि रक्ष स्म।५-४-३३ कालवेलासमये तुम्वाऽवसरे, कालो भोक्तुं भोक्तव्यस्य वा । ५-४-३४ सप्तमी यदि, समयो यदनुजानाति भवान्, बाहुल्याद् वेला यदुद्देशस्य।५-४-३५शक्तार्हे कृत्याश्च कर्त्तरि गम्ये, भारो वाह्यो भवता, वहेच्छेदस्त्वं भवान्, चानुकृष्टेन न यथासंख्यमित्यनित्यस्तेन बहुत्वं। ५-४-३९ माङ्य-द्यतनी, मा च भूत् कोऽपि दुःखितः, मि तु मा भवतु।५-४-४० सस्मे ह्यस्तनी च, करोन्मा स्म वधं कश्चित्, मा स्म कार्षी-स्त्वमंहांसि । ५-४-८९ इच्छार्थे कर्मणः सप्तमी तुल्यकर्त्तृके, भुञ्जीयेति इच्छति।५-४-९० शकधृषज्ञारभलभसहार्हग्ला-घटास्तिसमर्थार्थे च तुम्, चादिच्छार्थे, घटते युज्यते वा अलमिष्टे वा वष्टि वाञ्छति वा भोक्तुं, गम्ये द्रष्टुं चक्षुः, घटा:तेषु स्वरूपेष्विति ।५-४-४१ धातोः सम्बन्धे प्रत्ययाः अयथाकालं, भावि कृत्यमासीत्, सेत्स्यतीति ददर्श, गोमाना-सीत् । ५-४-४२ भृशाभीक्ष्ण्ये हिस्वौ यथाविधि तध्वमौ च तद्युष्मदि, ( बहुत्वविशिष्टे ), अधीष्वाधीष्वेत्येवायमधीते इमावधीयाते, एवं सर्वविभक्तिवचनेषु, शय्यस्व शय्यस्वेत्येव शय्यते, एवं कर्मणि, अधीध्वमधीध्वमिति यूयमधीध्वे, अधी-ष्वाधीष्वेत्येव यूयमधीध्वे, हिस्वोः कर्त्तृकर्मभावार्थत्वेन भृशा-भीक्ष्ण्यद्योतनाय द्वित्वं, यङि तु नैवं । ५-४-४३ प्रचये नवा सामान्यार्थस्य गम्ये हिस्वौ तध्वमौ च तद्युष्मदि, सूत्रमधीष्व निर्युक्तिमधीष्व भाष्यमधीष्व इत्येवाधीते पठ्यते वा ॥ इति विभक्तिव्यवस्था ॥

५-१-१- आतुमोऽत्यादिः कृत् । ५-१-२ बहुलं उक्ते-ऽन्यत्रापि च, मुह्यत्यनेनात्मेति मोहनीयं, दानीयोऽतिथिः।५-१-३ कर्त्तरि कृत् विशेषमन्तरा । ५-१-४ व्याप्ये घुरकेलिमकृष्ट-

पच्यम् कर्त्तरि, भिद्यन्ते स्वयम्। ५-२-७५ वेत्तिच्छिद्भिदः
कित्, भिदुरा भिदेलिमाः कृष्टपच्याः शालयः, भासमिदिविदां
कर्त्तर्येव छिदिभिदोरपीति । ५---२---७४ भञ्जिभासमिदो घुरः
शीलादौ । ४-१-१११ क्तेऽनिटश्चजोः कगौ घिति, भङ्गुरं
मेदुरः । ५-१-५ संगतेऽजर्यं, सामान्यविशेषभावेनाऽन्यत्र
च। ५-१-६ रुच्याव्यथ्यवास्तव्यं। ५-१-७ भव्यगेयजन्यर-
म्यापात्याप्लाव्यं नवा, पक्षे भावकर्मणोः। ५-१-८ प्रवचनी-
यादयः, उपस्थापनीयः रमणीयः दीपनीयं ज्ञानावरणीयं।५-१-९
श्लिषशीङ्स्थाऽऽसवसजनरुहजॄभजेः क्तः कर्त्तरि भूते,
आरूढो वृक्षं भवान्, सोपसर्गतया सकर्मकत्वात् । ४--२--६८
ॠल्वादेरेषां क्तिक्तक्तवतूनां तो नोऽप्रः, जीर्णः, पूर्णः इति
। ५-१-१० आरम्भे यः क्तः सः, प्रकृतः कटं कृतो वा
। ५-१-११ गत्यर्थाकर्मकपिबभुजेः, यातास्ते, पठितो भवान्
पयः पीताः अन्नं भुक्ताः, नाविवक्षितकर्मभ्य इति। २-३-८५ स्वरात्

कृतो नो णोऽदुरुपसर्गान्तरो रषुः, प्रहीणः प्रहाणः। २-३-८८
निर्विण्णाः। ५-१-१२ अद्यर्थाच्चाधारे कर्त्तरि क्तो वा, चाद्र-
त्यर्थादेः, इदमेषां जग्धं, इदं तेषां भुक्तं। ५-१-१३ त्वातुमम्
भावे, कृत्वा कर्तुम् कारं कारं वा व्रजति। ५-१-१४ भीमादयो-
ऽपादाने, भीष्मभयानकवरुसमुद्ररक्षःखलतयः। ५-१-१५ संप्र-
दानाच्चान्यत्रोणादयः कारके भावे च, करोतीति कारुः
।५-१-१६ असरूपोऽपवादे वोत्सर्गः प्राक्तेः, ज्ञः ज्ञाता ।
५-१-१७ ॠवर्णव्यञ्जनात् घ्यण्। ३-२-१३९ कृत्येऽवश्यमो
लुक्, अवश्यकार्यं। ५-१-१८ पाणिसमवाभ्यां सृजः, पाणि-
सर्ग्या रज्जुः। ५-१-१९ उवर्णादावश्यके, लाव्यं। ४-१-११५
घ्यण्यावश्यके न कगौ, अवश्यपाच्यं। ४-१-११६ निप्राद्युजः
शक्ये, नियोज्यः। ४-१-११७भुजो भक्ष्ये, भोज्या।४-१-११९
क्चोऽशब्दलाम्नि, वाच्यं। ४-१-१२० भुजन्युब्जं पाणि-
रोगे। ४-१-१२१ वीरुन्न्यग्रोधौ। ५-४-३६ णिन् चावश्यका-

धमर्ण्यं, चात्कृत्याः, अवश्यंकारी दायी । ५-१-२० आसुयुवपिरपिलपित्रपिडिपिदभिचम्यानमः, आसाव्यं याव्यं, आनाम्यं, अन्तर्भूतण्यर्थः सकर्मकः, नानमेरिति, दभि बंधने दाभ्यं। ५-१-२१ वाऽऽधारेऽमावस्या, सह वसतोऽस्यां सूर्याचन्द्रमसौ इत्यमावस्या। ५-१-२२ संचाय्यकुंडपाय्यराजसूयं क्रतौ । ५-१-२३ प्रणाय्यो निष्कामासंमते । ५-१-२४ धाय्यापाय्यसानाय्यनिकाय्यमृङ्मानहविर्निवासे, धाय्या ऋक् । ५-१-२५ परिचाय्योपचाय्यानाय्यसमुह्यचित्यमग्नौ । ५-१-२६ याज्या दानर्चि । ४-१-११८ त्यजयजप्रवचः न घ्यणि कगौ। ४-१-११२न्यङ्कूद्गमेघादयः, तक्रं वक्रं शुक्रः शोकः रोकः ( घ्यणि शोच्यं रोच्यं ) श्वपाकः मांसपाकः पिण्डपाक नीचेपाकः दूरेपाकः फलेपाकः क्षणेपाकः, उदन्ता आवन्ता अपि, अनुवाकः सोमप्रवाकः न्योकः समुद्रअनुषंगसर्ग (मस्जेरुः) मद्गुभृगुगोयोगाः ओघनिदाघार्घाः। ४-१-११३ न वञ्चेर्गतौ कः, वंच्यं वंक्यं। ४-१-११४ यजेर्यज्ञाङ्गे न गो, प्रयाजाः । ५-१-२७ तव्यानीयौ, शयितव्यं शयनीयं । ५-१-२८ य एचातः अनृतः स्वरात्, जेयं देयं। ५-१-२९शकितकिचतियतिशसिसहियजिभजिपवर्गात्, तप्यं गम्यं, याज्यं भाग्यं च, न यजिभजेरित। ५-१-३०यमिमदिगदोऽनुपसर्गात्, निगाद्यं मद्यं,करणेऽपि नियम्यं चेति। ५-१-३१चरेराङस्त्वगुरौ, चर्यं आचर्यो देशः। ४-३-९० क्षय्यजय्यौ शक्तौ ।४-३-९१ क्रय्यः क्रयार्थे।५-१-३२ वर्योपसर्यावद्यपण्यमुपेयर्तुमतीगर्ह्यविक्रेये, वयाऽपि। ५-१-३३ स्वामिवैश्येऽर्यः ।५-१-३४ वह्यं करणे। ५-१-३५ नाम्नो वदः क्यप् च, सत्यवद्यं सत्योद्यं प्रवाद्यं । ५-१-३६ हत्याभूयं भावे, श्वहत्या, देवभूयं गतः । ५-१-३७ अग्निचित्या । ५-१-३८ खेयमृषोद्ये, उत्खेयं मृषोद्यते मृषोद्यं । ५-१-३९ कुप्यभिद्योध्यसिध्यतिष्यपुष्ययुग्याज्यसूर्यं नाम्नि । ५-१-४० दृवृग्स्तुजुषेतिशासः

क्यप्।४-४-११३ ह्रस्वस्य तः पित्कृति, आहत्य प्रावृत्यः इत्यः अधीत्यः स्तुत्यः शिष्यः, आशास्यं, नायतेरिङश्च, ईचेरिकोऽपिचेति। ५-१-४१ ऋदुपान्त्यादकृपिचृदृचः,वृत्यं।५-१-४२ कृवृषिमृजिशंसिगुहिदुहिजपो वा, कृत्यं मृज्यं मार्ज्यं । ५ १-४३ जिविपून्यो हलिमुञ्जकल्के, जित्या जित्यो वा महद्धलं, विपूयः, न पूग इति, विनीयः। ५-१-४४ पदास्वैरिबाह्यापक्ष्ये ग्रहः, प्रगृह्यं अवगृह्यं, गृह्याः नगरगृह्या स्त्रियां, गुणगृह्या वचने विपश्चितः। ५-१-४५ भृगोऽसंज्ञायां। ५-१-४६ समो वा, संभृत्यः संभार्यः।५-१-४७ते कृत्याः घ्यणाद्याः।५ १-४८ णकतृचौ कर्त्तरि, पाचकः पक्ता दरिद्रायकः अधिजिगमिषिता, ङ्डो गम इट् नेति। ५-१-४९ अच्, पठः उद्वहः दरिद्रः। ४-१-७१३ चराचरचलाचलपतापतवदावदघनाघनपाटूपटं वा, पटूपट इति। ४-१-११४ चिक्लिदचक्नसं काचोः,प्रक्रन्ता। ४-४-२ त्रने वाऽजेर्वी, वेता अजिता। ५-४-३७ अर्हे तृच्, वोढा छेदस्त्रस्य, कारकः जनकः घातकः दायकः। ३-४-१५ आचि यङो लुप्, चेच्यः नेन्यः। ४-३-११ न वृद्धिश्चाविति क्ङिल्लोपे, चाद् गुणः। ३-४-१६ नोतः यङो लुप्. रोरूयः।५-१-५०लिहादिभ्यः अच्, शेषसेवदेवमेघमेषमेघदेहप्ररोहन्यग्रोधकोपगोपसर्पनर्त्तदर्शश्वपचपारापतकद्वदयद्वदारिव्रणाजारभराकन्यावररघूद्वहरसावहाः, नदीझषीप्लवीत्याद्या गौरादौ।५-१-५१ब्रुवः। ५-१-५२ नन्द्यादिभ्योऽनः, नन्दिवाशिमदिदूपिसाधिवर्धिशोभिरोचेः णेः, नन्दनः, सहिरमिदमिरुचिकृतितपितृदिदहियुपूलूभ्यः, समः कृषिक्रन्दिहृषिभ्यः संज्ञायाम्, कर्मणो दमिअर्दिनाशिसूदेः नर्दिभीषिभूषिदीपजल्पिभ्यः।५-१-५३ ग्रहादिभ्यो णिन्, स्थामन्त्रिमदिउपावापरोधः उत्सहिदहिभासेः निश्रुशीविशवसवपरक्षेः नञ्संव्याहृव्याहृसंव्यवहृयाचित्रजवदवसिभ्यः, नञः स्वरान्ताद्चित्तकर्त्तृकात्, अकारी, कार्यपि, व्यभिभ्यां भुवोऽतीते, विपरिभ्यां हस्वश्च, वेः शीङ्पिगोर्देशे हस्वश्च। २-२-८४ निंसनिक्षनिन्दः

क्रुति वा णः, प्रणिंसनं प्रनिंसनं। २-३-८६ नाम्यादेरेव ने स्वरात्कृतो नो णः, प्रेंखणं, प्रकम्पनं। २-३-८७ व्यञ्जनादेर्नाम्युपान्त्याद्वा कृतो णः, प्रमेहणं प्रमेहनं। २-३-८८ णेर्वा स्वरात्कृतो नो णः, प्रमंगणा प्रमंगना। २-३-९० न ख्यापूग्भूभाकमगमप्यायवेपो णेश्च, प्रभवनं प्रभावनं, प्रख्याणमिति। ५-१-५४ नाम्युपान्त्यप्रीकृगृज्ञः कः, बुधः प्रियः। ५-१-५५ गेहे ग्रहः, पुंभूम्नि। ५-१-५६ उपसर्गाद्वातो डोऽश्यः, प्रज्यः सुत्रः सुरः। ५-१-५७ व्याघ्राघ्रे प्राणिनसोः। ५-१-५८ घ्राध्मापाट्धेदृशः शः, पिबः साहचर्यात्सदृशस्य उद्धयी, सोपसर्गादेव ङीति। ५-१-५९ साहिसातिवेद्युदेजिधारिपारिचेतेरनुपसर्गात् शः, चेतयः, सात सुखे। ५-१-६० लिम्पविन्दः। ५-१-६१ निगवादेर्नाम्नि, लिम्पविन्दः, निलिम्पा देवाः, गोविन्दः कुविन्दः अरविन्दः। ५-१-६२ वा ज्वलादिदुनीभूग्रहास्रोर्णः, दवः दावः, बाहुल्यादुत्क्रोशः दुनीभ्यां नित्यमिति, आस्रवः आस्रावः व्यवस्थितविभाषया ग्राहो मकरादिः ग्रहः सूर्यादिः। ५-१-६३ अवहृसासंस्रोः, अवसायः, संस्रवोऽपि। ५-१-६४ तन्व्यधीण्श्वसातः, अवश्यायः, अतिपूर्वादेवेण इति। ५-१-६५ नृत्खन्रञ्जः शिल्पिन्यकट्, नर्तकः रजकः। ५-१-६६ गस्थकः। ५-१-६७ टनण् गः, गायनः, एतावशिल्पिन्यपि। ५-१-६८ हः कालव्रीह्योः, हायनः। ५-१-६९ प्रुसृल्वोऽकः साधौ, साधु प्रव्रते प्रवकः। ५-१-७० आशिष्यकन्, जीवका दरिद्रकः। ५-१-७१ तिक्कृतौ नाम्नि आशिषि, शान्तिः वीरो भूयादिति वीरभूः अग्निभूतिः देवदत्तः शर्व वर्मा गङ्गामित्रः वर्धमानः। ४-२-५९ न तिकि दीर्घश्च गमां, चाद् लुक्, यन्तिः। ४-२-६४ तौ सनस्तिकि वा लुग्दीर्घौ, सतिः सातिः सन्तिः। ५-१-७२ कर्मणोऽण्, सूत्रधारी, ग्रामं गच्छति महान्तं घटं करोतीत्यादौ अनभिधाने सापेक्षे च न। ५-१-७३ शीलिकामिभक्ष्याचरीक्षिक्षमो णः, बहुक्षमा। ५-१-७४ गायोऽनुपसर्गाट्टक्, वक्रगः सामगी

।५-१-७५ सुराशीधोः पिबः, शीधुपी।५-१-७६ आतो डोऽह्वावामः, पार्ष्णित्रं, आदिति निर्निमित्तं।५-१-७७ समः ख्यः, गोसंख्यः । ५-१-७८ दश्चाङः, प्रियाख्यः।५-१-७९ प्राज्ज्ञश्च, पथिप्रज्ञः प्रपापदः स्तनप्रधायः, व्याख्यातो विशेषार्थप्रत्तिपत्तिरिति दारूपग्रहणं।५-१-८० आशिषि हनः, शत्रुहः। ५-१-८१क्लेशादिभ्योऽपात् हनः, क्लेशतमोदुःखदर्परोगज्वरदोषाः, संपूर्वाद् घटिहनेः अण्।५-१-८२ कुमारशीर्षाण्णिन्, शीर्षघाती।५-१-८३ अचित्ते टक्, जायाघ्नाः तिलकालकाः । ५-१-८४ जायापतेश्चिह्नवति, जायाघ्नः५-१-८५ ब्रह्मादिभ्यः, कृतशत्रुवृत्रभ्रूणवाणशशगावः, गोघ्नोऽतिथिः संप्रदाने।५-१-८६ हस्तिबाहुकपाटाच्छक्तौ, हस्तिघ्नो ना ५-१-८७ नगरादगजे । ५-१-८८ राजघः । ५-१-८९ पाणिघताडघौ शिल्पिनि, करणादपि । ५-१-९० कुक्ष्यात्मोदराद् भृगः खिः, कुक्षिंभरिः । ५-१-९१ अर्होऽच्, पूजार्हा प्रतिमा । ५-१-९२ धनुर्दण्डत्सरुलाङ्गलाङ्कुशर्ष्टियष्टिशक्तितोमरघटाद्ग्रहः, घटीग्रहः, अणपि ।५-१-९३ सूत्राद्धारणे, सूत्रग्रहः, अवधारणेऽपि।५-१-९४ आयुधादिभ्यो धृगोऽदण्डादेः, चक्रधरः वज्रधरः भूधरः। ५-१-९५ हृगो वयोऽनुद्यमे, कवचहरः मनोहरः, संज्ञायां टोऽपि, ।५-१-९६आङः शीले,फलाहरः।५-१-९७ दृतिनाथात् पशाविः ।५-१-९८ रजःफलेमलाद्ग्रहः, मलग्रहिः। ५-१-९९ देववातादापः, वातापिः। ५-१-१०० सकृत्स्तम्बाद्वत्सव्रीहौ कृगः ।५-१-१०१किंयत्तद्बहोरः, बहुकरः।५-१-१०२ संख्याहर्दिवाविभानिशाप्रभाभाश्चित्रकर्त्राद्यन्तानन्तकारबाह्वरुर्धनुर्नान्दीलिपिलिबिबलिभक्तिक्षेत्रजङ्घाक्षपाक्षणदारजनिदोषादिनदिवसाट्टः कृगः, संख्याकरः बहुकरी त्रिकरः ।५-१-१०३ हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदात्, तीर्थकरः क्रीडाकरः वचनकरः, शब्दकारः । ५-१-१०४ भृतौ कर्मणः, कर्मकरी । ५-१-१०५ क्षेम-

प्रियमद्रभद्रात्खाण्, क्षेमंकरः क्षेमकारः, संख्यादावन्तानन्तग्रहणात् उपपदे न तदन्तविधिः, योमक्षेमकरी विद्या। ५-१-१०६ मेघर्त्तिभयाभयात्खः, भयंकरः,परत्वान्न हेत्वादौ टः।५-१-१०७ प्रियवशाद्वदः। ५-१-१०८ द्विषन्तपपरन्तपौ णेः, स्त्रियामनभिधानात् द्विषतीतापः। ५-१-१०९परिमाणार्थमितनखात्पचः, प्रस्थंपचा। ५-१-११० कूलाभ्रकरीषात्कषः।५-१-१११ सर्वात्सहश्च, सर्वंकषः।५-१-११२ भृवृजितृतपदमेश्च नाम्नि, विश्वंभरा पतिंवरा शत्रुंजयः, दमिरन्तर्भूतण्यर्थो ण्यन्तश्च, रथन्तरमपि। ५-१-११३धारेर्धर् च, वसुंधरा। ५-१-११४पुरन्दरभगन्दरौ। ५-१-११५ वाचंयमो व्रते। ५-१-११६ मन्याण्णिन्, पण्डितं मन्यते बन्धुं पण्डितमानी। ५-१-११७ कर्त्तुः खश् कर्मणः, आत्मानं पण्डितं मन्यते पण्डितंमन्यः, णिनि पण्डितमानिनी। ५-१-११८ एजेः, अरिमेजयः। ५-१-११९ शुनीस्तनमुञ्जकूलास्यपुष्पात् ट्धेः, पुष्पंधयः। ५-१-१२० नाडीघटीखरीमुष्टिनासिकावाताद् ध्मश्च, नाडिंधमः नाडिंधयः, ङ्यभावे शडौ। ५-१-१२१ पाणिकरात्, करन्धमः, ट्धेरपि। ५-१-१२२ कूलादुद्रुजोद्वहः।५-१-१२३वहाभ्राल्लिहः। ५-१-१२४ बहुविध्वरुंस्तिलात्तुदः, अरुन्तुदः। ५-१-१२५ ललाटवातशर्द्धात्तपाजहाकः, शर्द्धंजहः। ५-१-१२५ असूर्योग्राद् दृशः, किं हि वचनान्न भवतीति नञा सूर्यस्य सम्बन्धः, दृशिना सम्बद्धस्य नञः सूर्येण सहासामर्थ्येऽपि गमकत्वात्स मासः। ५-१-१२७ इरम्मदः। ५-१-१२८ नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्ताच्च्व्यर्थेऽच्वेर्भुवः खिष्णुखुकञौ, आढ्यंभविष्णुः सुनग्नंभावुकः। ५-१-१२९ कृगः खनट् करणे च्वावच्वेः, च्वेरपि, अपलितंकरणो रसः। ५-१-१३०भावे चाशिताद् भुवः खः, न घञ् स्वरूपत्वात्, निर्देशात्कर्त्तरि क्तो दीर्घत्वं चाशः, आङो वा गत्यर्थेति क्तः। ५-१-१३१ नाम्नो गमः खड्डौ च विहायसस्तु विहः,तुरंगः तुरगः भुजङ्गः, भुजगः प्लवगः पत-

ग उरग आपगा, विहङ्गमः, हृदयङ्गमः। ५-१-१३२ सुगदुर्ग-
माधारे। ५-१-१३३ निर्गो देशे। ५-१-१३४ शमो नाम्न्यः,
शम्भवः शंवदः, हेत्वादिष्वप्यः॥५-१-१३५पार्श्वादिभ्यः शीङः,
प्रष्ठोदरौ दिग्धसहशयः। ५-१-१३६ ऊर्ध्वादिभ्यः कर्त्तुः, ऊर्ध्वं
शेते ऊर्ध्वशयः।५-१-१३७ आधारात्, खगर्त्तगुहाहृदविलेमन-
सिकुशेभ्यः।५-१-१३८ चरेष्टः आधारात्, कुरुमद्रवनेनिशाभ्यः
।५-१-१३९ भिक्षासेनादायात्, आदायचरः। ५-१-१४०
पुरोऽग्रतोऽग्रे सर्त्तेः। ५-१-१४१ पूर्वात् कर्त्तुः, पूर्वः सरति
पूर्वसरः।५-१-१४२स्थापास्नात्रः कः, समस्थः, परत्वात् शंस्थः
।५-१-१४३शोकापनुदतुन्दपरिमृजस्तम्बेरमकर्णेजपं प्रिया-
ऽलसहस्तिसूचके। ५-१-१४४ मूलविभुजादयः, उर्वीरुह-
कुमुदमहीध्रोपर्बुधाभ्रसरसिरुहनखमुचकाकगुहधर्मप्रदशास्त्रप्रज्ञाः
।५-१-१४५ दुहेर्डुघः, कामान् दुग्धे कामदुघा। ५-१-१४६
भजो विण्, अर्धभाक्, नामग्रहणे प्रायेणोपसर्गस्य न ग्रहण

मिति प्रायोवचनात्प्रभाग्। ५-१-१४७ मन्वन्क्वनिप्विच्
क्वचित्, सुदामा क्वचिद्ववचनात् केवलात् शर्म, परादन्तरङ्गं बलीय
इति यत्वे गुण ऊटः स्योमा। ४-२-६६ वन्याङ् पञ्चमस्य,
घिणुङो ङित्त्वात् घ्यावा, जात्यग्रहणे सुधिनावा, सुपीवानौ
कृत्वानौ शुभंयाः,।५-१-१४८क्विप् क्वचित्, उखास्रद् वहाभ्रद्,
घञ्युपेत्यत्र बाहुल्यात् दीर्घः, जागः शंस्थाः क्विपि न व्यञ्जन-
कार्यं तदीन्न, पाः वाः कीः गीः लुप्तेऽपीरिति। ४-४-११९ क्वौ इस्
शास आसः, मित्रशीः। ४-४-१२० आङः, आशीः। ४-२-३३
छदेरिस्मन्त्रट् क्वौ ह्रस्वः, धामच्छत्, सदिसूद्विषद्रुहदुहयुज-
विद्भिद्छिद्जिनीराजिभ्यः, देवद्र्यङ् सम्यङ्, अञ्चेः केवलान्न,
लाभार्थो विदिति। ४-२-५८ गमां क्वौ लुक्, जनगत्, यथालक्ष्यं
बहुलं नातो यमादिगतगमां, ऋत्विक् दधृक उष्णिक्। ५-१-१४९
स्पृशोऽनुदकात्, मन्त्रस्पृक्, कर्मण एवेति, पर्युदासादनुपसर्गम्
।५-१-१५० अदोऽनन्नात्, सस्यात्, बाहुलकात्कणादः

।५-१-१५१ क्व्यात्क्रव्यादावामपक्वादौ, तादृग् तादृक्षः तादृशी ईदृक् । ५-१-१५३ कर्त्तुर्णिन् उपमानात्, सिंहनर्दी ।५-१-१५४ अजातेः शीले, शीतभोजी प्रयायी प्रतिबोधी, प्रसज्यप्रतिषधात् उदाङ्प्रत्याङ्भ्यां सर्त्तेरेवापि । ५-१-१५५ साधौ, चारु नृत्यति चारुनर्त्ती । ५-१-१५६ ब्रह्मणो वदः । ५-१-१५७ व्रताभीक्ष्ण्ये, पार्श्वशायी क्षीरपायिणः । ५-१-१५८ करणाद्यजो भूते, अग्निष्टोमयाजी । ५-१-१५९ निन्द्ये व्याप्यादिन् विक्रियः, घृतविक्रयी, इना सिद्धौ कुत्सायामणबाधनाय ।५-१-१६० हनो णिन् निन्द्ये व्याप्यात्, मातुलघाती, मत्वर्थीयेन शत्रुघात्यादि, तदपि, अणि मातुलघातः।५-१-१६१ब्रह्मभ्रूणवृत्रात् क्विप् भूते हन्तेः, वृत्रघ्नः, मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् इत्यणादेर्बाधः न क्तादेः, बाहुल्याच्चतुर्विधो नियमः । ५-१-१६२ कृगः सुपुण्यपापकर्ममन्त्रपदात् भूते क्विप्, अत्रैभ्य इति न नियमः, तीर्थकृत् भाष्यकृत्।५-१-१६३ सोमात्सुगः।५-१-१६४ अग्नेश्चेः । ५-१-१६५कर्मण्यग्न्यर्थे, श्येन इव चीयते स्म श्येनचित्, कालत्रयेऽपि । ५-१-१६६ दृशः क्वनिप्, मेरुदृश्वा, प्रत्ययान्तरबाधनाय वचनं । ५-१-१६७ सहराजभ्यां कृग्युधेः। ५-१-१६८ अनोर्जनेर्डः । ५-१-१६९ सप्तम्याः जनेर्डः, अब्जं ।५-१-१७०अजातेः पञ्चम्याः, बुद्धिजः ।५-१-१७१ क्वचित्, किंजाजद्विजप्रजानुजाः, ब्राह्मणजो वधः वृह्मज्यः वराहः परिखा वार्चः, नामधातुकालकारकान्यत्वे ।५-१-१७२सुयजो ङ्वनिप्, सुत्वा यज्वा।५-१-१७३जृषोऽतृः, जरन् । ५-१-१७४ क्तक्तवतू भूते, कृतवान् प्रनष्टः । ४-२-७४ क्षेः क्षी चाध्यार्थे, चान्नो, णः, न क्षिषः, तस्यापि । ४-२-७५ वाऽऽक्रोशदैन्ये, भावकर्मणी ध्यणर्थः, क्षीणायुः क्षीतायुः क्षीणं, भावेऽपि । ४-४-५७ ऋवर्णश्र्युर्णुगः कितो नेट् एकस्वरात्, ऊर्णुतः श्रितवान् वृतः तीर्णः।४-४-५८उवर्णात् कितो नेट्, नुतः भूतः मव्यितः।४-२-७२सूदिद्व्यञ्चेर्नाशाद्यूताऽनापादाने तो

नः, समक्नः। ४-४-६२ वेटोऽपतः क्तयोर्नेट्।४-४-४२ऊदितो वा क्त्व इडादिः। ४-२-६९ रदादमूर्छमदः क्तयोर्दस्य च नः, पूरै पूर्णः, वर्णदेशाग्रहात्कृतः, चीर्णस्तु त्रः। ४-२-७१ व्यञ्जनान्तस्थातोऽख्याध्यः, द्राणः ग्लानवान्, न निर्याते धातोर्व्यञ्जनान्तस्थाः, द्विर्भावस्त्वसिद्धः। ४-२-७७ दुगो रू च, दूनं। ४-२-७३ सेर्ग्रासे कर्मकर्त्तरि, सिनः, सिनोतेरेवेति, पिंशः सितः। ४-२-७० सूयत्याद्योदितः, सूनः लग्नः।४-४-६१ डीयश्व्यैदितः क्तयोर्नेट्, डीनः। ४-१-१०३ दीर्घमवोऽन्त्यं ग्व्यत्, जीनः शूनः चरिकृत्तः, वेद्त्वेन सिद्धे यङ्लुबर्थमैदित्, उपदेधितः। ४-१-९७ श्यः शीर्द्रवमूर्त्ति(काठिन्यं) स्पर्शे नश्चास्पर्शे, शीतं, शीनं। ४-१-९८प्रतेः, प्रतिशीनः। ४-१-९९ वाऽभ्यवाभ्याम्, अभिशीनं अभिश्यानं वा घृतं, सम्यन्तरे अभ्यवशानोऽपि च, वृक्णः। २ ३-५२ परेः स्कन्दः षो वा, परिष्कन्नः

।४-२-७९ निर्वाणमवाते। ४-२-७८ क्षैशुषिपचो मकवम्, पक्वं। ४-१-९५ प्रसमः स्त्यः स्तीः, प्रसंस्तीतः। ४-१-९६ प्रात्तश्च मो वा, प्रस्तीमः प्रस्तीतः। ४-२-८० अनुपसर्गाः क्षीवोल्लाघकृशपरिकृशफुल्लोत्फुल्लसंफुल्लाः, इष्टविषयं निपातनं तेन फलितः, क्तवतावपि। ४-४-७१ आदितः क्तयोर्नेट्, मिन्नः। ४-४-७२ नवा भावारम्भे आदितः, यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति वेट इति निषेधो भावारम्भ एवात्र, तत आदितः सूत्रम्। ४-२-७५ ऋह्रीघ्राध्रात्रोन्दनुदविन्तेर्वा ( व्यवस्थितविभाषा ) नः, ऋणं देयं, ऋतं सत्यं। ४-२-८२ वित्तं धनप्रतीतं। ४-२-८१ भित्तं शकलं। ४-१-९४ स्फायः स्फीर्वा, स्फीतः, चेन सूचनात् उत्स्तब्धः। ४-४-४० क्तयोः निष्कुष इट्। जातः। ४-४-४२ क्षुधवसस्तेषां क्तक्तवतुक्त्वां, उषितः, न यङ्लुपीति। ४-४ ४४ लुभ्यञ्चेर्विमोहार्चे

तेषामिट्। ४-४-४५ पूङ्क्लिशिभ्यो नवा तेषां, पूतः पवितः ।४-३-२७ न डीङ्शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदः सेटौ क्तौ कित्, शयितः शेशयितः। ४-३-२८मृषः क्षान्तौ न कित्,मर्षितः । ४-३-२६ उति शवर्हाद्भ्यः क्तौ भावारम्भे सेटौ वा कित्, कुचितं कोचितमनेन। ४-३-८४ सेट्क्तयोर्णेर्लुक्, भावितः, पतितः। ४-४-६९ बलिस्थूले दृढः। ४-४-७२ शकः कर्मणि क्तयोर्वेट्, शक्तः शकितः। २-३-४७ सयसितस्य सः षः परिनिवेः, परिषितः, निःसितः, धौतः। ४--४--७० क्षुब्ध-विरब्धस्वान्तध्वान्तलग्नम्लिष्टफाण्टबाढपरिवृढं मन्थ-स्वरमनस्तमःसक्तास्पष्टानायासभृशप्रभौ। ४-४-६६ धृष-शसः प्रगल्भे, जितसभोऽविनीतो वा धृष्टः । ४-४-६७ कषः कृच्छ्रगहने। ४-४-६८ घुषेरविशब्दे, विशब्दनं नाना-शब्दनं प्रतिज्ञानं वा। ४-४-६२ सन्निवेरर्दः, समर्णः, अर्ण्णं इति। ४-४-६४ अविदूरेऽभेः, अभ्यर्णं। ४-४-६५ वृत्तेर्वृत्ति-ग्रन्थे, अधीते कृते वा, वर्तितमिति। ४-१-१०० श्रः शृतं हविः-क्षीरे, अकर्मककर्मकर्त्रोः, सकर्मकयोरित्यपि। ४-१-१०१ श्रपेः प्रयोक्रैक्ये, शृतं हविः क्षीरं वा त्वया, चुरादेर्गिति। ४-४-७४ णौ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्तं वा, दमितः दान्तः । ४--४--७५ श्वसजपवमरुषत्वरसंघुषास्वनामः वेट्, आस्वान्तः आस्वनितः, न श्वसेः कर्तरि वा ऽ्याङ्भ्यां श्वसो न प्राङ्वे-र्निरश्च,न जपिवम्योर्नित्यं वान्तवानिति च। ४-४-७६हृषेः केशलोम-विस्मयप्रतिघाते, हृष्टः हृषितः।४-४-७७ अपचितः। ४-१-९२ क्तयोरनुपसर्गस्य प्यायः पीः, पीनं। ४-१-९३ आङोऽन्धू-धसोः। ४-२-६७ ह्लादो ह्लद् क्तयोश्च, चात् क्तौ, ह्लन्नः ।४-४-११ दोसोमास्थ इः किति ति, मितः, माते र्मातोऽपि ।४--४--१२ छाशोर्वा, शितः निशातः। ४--४--१३ शो व्रते,

संशितं। ४-४-१५ धागः हिः किति तादौ। ३-२-१३९ समस्त-
तहिते वा मो लुक्, सहितं संहितं, द्धेस्तु निधीतः। ४ ४-७
प्रादागस्त आरम्भे क्ते वा, प्रत्तः प्रदत्तं, सर्वादेशाय त्तः
। ४-४-८ निविस्वन्ववात्, निदत्तं, आरम्भे वा सोनेति च
। ३-२-८८ दस्ति नामिनो दीर्घः, नीत्तं। ४-४-९ स्वरादुप-
सर्गाद्दस्ति कित्यधः, प्रत्तः। ४-४-१० दत् दस्ति कित्यधः दत्तः
।४-४-१६ यपि चादो जग्ध् किति, जग्धं, अन्तरङ्गानपि विधी-
न्यबादेशो बाधते इति ज्ञापनाय यप्, तेन प्रशम्येत्यादौ न
दीर्घादि। २-३-२० निनद्याः स्नातेः कौशले षः। २-३-२१
प्रतेः स्नातस्य सूत्रे षः। ५-२-२ तत्र क्वसुकानौ तद्वत्
परोक्षायां, शुश्रुवान् रेधिवान्, ददरिद्रावानपि, ऋसंयोगान्तार्थं
कित्, सस्वजानः शशिराणः, न श्वादेः कानः, क्वसुरेभ्य एव, न
कानः प्रत्ययः सर्वेभ्यः क्वसुरेवापिचेति, आनृच्छ्वान् चिचि-

कीर्वान् संचस्कराणः। ५-२-३ वेयिवदनाश्वदनूचानं कर्त्तरि
भूते, वाद्यतन्याद्यर्थं श्रुगो वच्। ४-४-८२ घसेकस्वरातः
क्वसोः आदिरिट्, जक्षिवान् आदिवान् ईयिवान्, नित्यत्वात्पूर्व-
मिट्, नात्र विहितविशेषणं, ददिवान्। ४-४-८३ गमहन-
विद्लविशद्दशो वा, वेत्तेरपि। ४-१-१४ दाश्वत्साह्वत्
मीढ्वत्।५-२-२० शत्रानशावेष्यति तु सस्यौ सति, पचन्
पापेतीति पिबन् पक्ष्यन् पचमानः पक्ष्यमाणः, तरादौ पक्ष्यत्तरः,
द्रव्यगुणयोर्लक्षणे हेतुहेतुमद्भावद्योतके त्यादियोगे क्रियालक्षणे
चादियोगे च न, यत् तरति तच्छ्रु, हन्तीति पलायते,
योऽधीते चास्ते स मैत्रः, द्वितीयाद्यन्तपदसामानाधिकरण्य-
संबोधनतरादिवर्जिततद्धितप्रत्ययोत्तरपदक्रियालक्षणक्रियाहेतुषु
शत्रानशावेव, पचति गतः, पचन् पचत्तरः कुर्वद्भक्तिः, तिष्ठन्तो-
ऽनुशासति गमकाः, शयाना वर्धते दूर्वा, यः पचन् पठति स

मैत्रः। ५-२-२१ तौ माङ्याक्रोशेषु, मा जीवन्, बहुत्वादसति, नियमार्थं च तौ, तेन नाद्यतनी, स्यादापिच। ४-४-११५ आसीनः ।५-२-२२ वा वेत्तेः क्वसुः सति, विद्वान् विदन्। ५-२-२३ पूङ्यजः शानः, पवमानः। ५-२-२४ वयःशक्तिशीले, कतीहात्मानं वर्णयमानाः। ५-२-२५ धारीङोऽकृच्छ्रेऽतृश्, धारयंस्तत्त्वार्थं, न सरूपोऽपि। ५-२-२६ सुग्द्विषार्हः सत्रि-शत्रुस्तुत्ये, अर्हन्। ५-२-२७ तृन् शीलधर्मसाधुषु, कर्त्ता कटं। ५-२-२८ भ्राज्यलंकृग्निरा-(८३ यावत्) कृग्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रप इष्णुः, अपत्र-पिष्णुः, न भ्राजेरिति, शीलाद्यर्थेषु नासरूपोत्सर्गोविधिरित्यलंकर्त्ता न। ५-२-२९ उदः पचिपतिपदिमदेः, उन्मदिष्णुः, न पदे-रिति। ५-२-३० भूजेः ष्णुक्, जिष्णुः। ५-२-३१ स्थाग्लाम्ला-पचिपरिमृजिक्षेः स्नुः, पक्ष्णुः क्षेष्णुः। ५-२-३२ त्रसिगृधि-धृषिक्षिपः क्नुः, क्षिप्नुः। ५-२-३३ सम्भिक्षाशंसेरुः, चिकीर्षुः, स्तुत्यर्थशंसेरपि। ५-२-३४ विन्द्विच्छू, सर्वविदीपीणामपि ।५-२-३५ शृवन्देरारुः, वन्दारुः। ५-२-३६ दाट्धेसिशदसदो रुः, दारूपं। ५-२-३७ शीङ्श्रद्धानिद्रातन्द्रादायिपति-गृहिस्पृहेरालुः, दयालुः, पत्याद्या अदन्ताः, पतिगृही सौत्रावी-कारान्तौ वा, नाम्नां व्युत्पत्तिरव्यवस्थितेति ताद्धिते न क्षतिः, द्रायतेर्न तु द्रातेरित्यपि, पतयालुः, मृगयालुरिति। ५-२-३८ ङौ सासहिवावहिचाचलिपापतिं, (ङिवचनं), निपातनान्नीः। ५-२-३९ सास्रिचक्रिदधिजज्ञिनेमिः। ५-२-४० शृकमगमहनवृषभूस्थ उकण्, शारुकः, उपस्थायुको गुरुं ।५-२-४१ लषपतपदः उपपादुकः। ५-२-४२ भूषाक्रोधार्थजु-सृगृधिज्वलशुचश्चानः, मण्डनः कोपनः ज्वलनः लषणः, सक-र्मकार्थं पदिः, उत्तरत्र सकर्मकभ्योऽपि, नासरूपविधिः। ५-२-४३

घलशब्दार्थादकर्मकात्, चेष्टनः । ५-२-४४ इङितो व्यञ्जनाद्यन्तात्, वर्धनः, णेरतश्च विषय एव लोपे चेतनः जुगुप्सनः, अवयवे कृतं लिङ्गं समुदायस्य, नाव्याप्यादिति । ५--२--४५ न णिङ्यसूददीपदीक्षः, क्नूयिता दीक्षिता, रेण वाधेऽपि दीपिग्रहात् शीलादिसमावेशः, अनस्यैवेति । ५-२-४६ द्रमक्रमो यङः, दन्द्रमणः । ५-२-४७ यजिजपिदंशिवदादूकः यङः, वावदूकः, अन्येभ्योऽपि । ५-२-४८ जागुः उकः । ५-२-४९ शमष्टकाद् घिनण्, क्रमी, अकर्मकात्, न तृन् । ५-२-५० युजभुजभजत्यजरञ्जद्विषदुषद्रुहदुहाभ्याहनः, अभ्याघाती । ५-२-५१ आङः क्रीडमुषः, शीलाद्यन्तानां रूढिप्रकारत्वान्नोपसर्गान्तराधिक्ये । ५-२-५२ प्राच्च यमयसः, आयासी । ५--२ -५३ मथलपः, प्रलापी । ५--२--५४ वेश्च द्रोः, प्रद्रावी । ५-२-५५ विपरिप्रात्सर्त्तेः, प्रसारी । ५-२-५६ समः पृचैपृज्वरेः, संत्वरीति णेः पृचैकेऽपि चेति । ५--२--५७ संवेः सृजः । ५-२-५८ संपरिव्यनुप्राद्वदः, परेर्णेरपि । ५-२-५९ वेर्विचकत्थस्रंभकषकसलषहनः, विघाती । ५-२-६० व्यपाभेर्लषः । ५-२-६१ संप्राद्वसात् । ५--२--६२ समत्यपाभिव्यभेश्चरः । ५-२-६३ समनुव्यवाद्रुधः । ५-२-६४ वेर्दहः । ५-२-६५ परेर्देविमुहश्च, परिदाही परिमोही, न ण्यन्तो देविरिति । ५-२-६६ क्षिपरटः, परिराटी । ५--२--६७ वादेश्च णकः, परिक्षेपकः, शीलादिष्वित्यस्य न समानोऽप्युत्सर्ग इत्यर्थे बाहुल्याद् खादकौ । ५-२-६८ निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकस्वरात्, चकासकः, अन्यकण्ड्वादिणेर्न । ५-२-६९ उपसर्गाद्देवृदेविक्रुशः, आदेवकः, देवेर्णेरेवेति ५-२-७० । वृङ्भिक्षिलुण्टिजल्पिकुट्टाट्टाकः, वराकी भिक्षाकः । ५-२-७१ प्रात्सूजोरिन्, प्रजवी, सुवः सेटोऽपि । ५--२--७२ जीणृदृक्षिविश्रि-

परिभूवमाभ्यमाऽव्यथः, जयी उदयी दरी क्षयी विश्रयी परिभवी वमी अभ्यमी अव्यथी । ५-२-७३ सृघस्यदो मरक् ।५-२.७६ भियो रुरुकलुकम् कित्, भीरुकः भीलुकः, ऋफिडादिना लत्वे गुरुता, न सा लुके। ५-२-७७ सृजीण्नशष्ट्वरप् कित्, नश्वरी । ५-२-७८ गत्वरः । ५-२-७९ स्म्यजसहिंसदीपकम्पकमनमो रः, अजस्रं नम्रं ( विशिष्टक्रियावाचि ) कमो बाहुल्यात् कर्मणि, अजसिकमिनमिभ्यः कर्मकर्त्तर्येवेति । ५-२-८० तृषिधृषिस्वपो नजिङ्, स्वप्नग्, धृषो नेति । ५-२-८१ स्थेशभासपिसकसो वरः, पेस्वरः, प्रमदेरपि, औणादिवरटि ईश्वरी । ५-२-८२यायावरः।५-२-८३दिद्युदद्दज्जगज्जुहूवाक्प्राड्धीश्रीद्रुस्रुज्वायतस्तूकटप्रूपरिव्राड्भ्राजादयः क्विपः, भाः पूः धूः विद्युत् ऊर्क् पक् शक् भित् वित् छित्, संज्ञायां भूः शम्भूः, संज्ञाशब्दानां शीलाद्यर्थेपु कामचारायथाकथञ्चिद् व्युत्पत्तिरिति। ५-२-८४ शंसंस्वयंविप्राद् भुवो डुः, प्रभुः ( सति )। ५-२-८५ पुव इत्रो दैवते, पवित्रोऽर्हन् पातु । ५-२-८६ ऋषिनाम्नोः करणे, ओघोपकरणं पवित्रं, ऋषौ कर्त्तर्यपि । ५ २-८७ लूधूसूखनचरसहार्त्तेः, अरित्रं, धूनोतेर्वेहेरपिचेति । ५-२-८८ नीदाव्शसूयुयुजस्तुतुदसिसिचमिहपतपानहस्त्रट्, नद्ध्रः । ५-२-८९ हलक्रोडास्ये पुवः, पोत्रं, अत्रोणादेरिति नेट् । ५ २-९० दंशेस्त्रः दंष्ट्रा । ५-२-९१ धात्री । ५-२-९२ ज्ञानेच्छार्चार्थञीच्छील्यादिभ्यः क्तः सत्यर्थे, ज्ञातः इष्टः अर्चितः सुप्तः इद्धः, भूते बाहुल्यात्, तेन तृतीयासमासः अर्हद्भ्यस्त्रिभुवनराजपूजितेभ्यः । ५-३-१ वर्त्स्यति गम्यादिः, ग्रामंगमी । ४-३-२ वा हेतुसिद्धौ क्तः, प्राप्तं चरित्रं तीर्णो भवाब्धिः । ५-३-२कषोऽनिटः, सत्यपि । ५ ३-१८ भाववचनाः क्रियार्थायां क्रियायां उपपदे वर्त्स्यति, पाकाय

व्रजति। ५-३-१४कर्मणोऽण् धातोः, कुम्भकारो व्रजति, टगादि-वाधात् सुरापायो व्रजति। ५-३-१६ पदरुजविशस्पृशो घञ् कर्त्तरि, स्पर्शः। ५--३--१७ सर्त्तेः स्थिरव्याधिबलमत्स्ये, अतीसारः विसारः सारः, वाहुलकात् विसरप्रसरौ। ५--३--१८ भावाकर्त्रोः। ४ २-५२ घञि भावकरणे रञ्जेर्नो लुक्, रागः आहरन्त्यस्मादाहारः, असंज्ञायां दायो दत्तः, वाहुल्यात्कृतः कट इत्यादौ न, पर्युदासान्न सम्बन्धे, साध्ये त्यादयः सिद्धतायां घञादयो धातोः, (१२१ यावत्)। ४-२-४ स्फुरस्फुलोर्घञि आत्। ३-२-८७नामिनः काशे दीर्घः। ४-३-५७ उद्यमोपरमौ ।४--२--५३ स्यदो जवे। ४--२--५४ दशनावोदैधोद्मप्रश्रथ-हिमश्रथं।५--३--१९ इङोऽपादाने तु टिद्वा, उपाध्यायी, न क्तिः।५-३-२० श्रोर्यायुवर्णनिवृते ( प्रावरणं ), निवृता द्यू-तोपकरणमपि। ५-३-२१ निरभेः पुल्वः भावाकर्त्रोः। ५-३ २२ रोरुपसर्गात्, संरावः, वाहुल्याद्रावः। ५-३-२३ भूश्र्यदोऽल्, प्रभवः, वाहुल्यात् प्रभावविभावानुभावाः प्रादिसमासो वा ।५--३--२४ न्यादो नवा, न्यादः निघसः। ५--३--२५ संनि-व्युपाद्यमः अल्, संयमः संयामः। ५-३-२६ नेर्नदगदपठ-स्वनक्वणः, निपठः निपाठः। २-३ २४ अभिनिःष्ठानः षः, वर्णे। २--३- २२ स्नानस्य नाम्नि षः प्रतेः। ५--३--२७ वैणे क्वणः वा ( शब्दे ), क्वणः क्वाणः। ५--३--२८ युवर्णवृदृ-वशरणगमृद्ग्रहः, तरः जयः, स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ इत्यनित्यस्तज्जितिर्न, स्तवः, वाहुल्याद्वारः ।५-३-२९ वर्षादयः क्लीबे, भयधनवनखलपदयुगानि। ५-३-३० समुदोऽजः पशौ, उदजः। ५--३--३१ सृग्लहः प्रजनाक्षे, उपसरः ( गर्भग्रहणाय प्रथमसरणं ) ग्लहः, लत्वं निपातनात् ।५-३-३२ पणेर्माने, शाकपणः। ५-३-३३संमद (कोकिलानां)-

प्रमदौ ( कन्यानाम् ) हर्षे। ५-३-३४ हनोऽन्तर्घनान्तर-
घणौ ( अभ्यन्तरो देशो ) देशे, घणिर्धातुरपि च। ५-३-३५
प्रघणप्रघाणौ गृहांशे। ५-३-३६ निघोद्घसंघोद्घना-
पघनोपघ्नं निमित्तप्रशस्तगणात्याधानाङ्गासन्नम्।५-३-३७
मूर्त्तिनिचिताऽभ्रे घनः। ५-३-३८ व्ययोद्रोः करणे,
विघनः, स्त्रियां विहननी, द्रुघणः। ५-३-३९ स्तम्बाद्
घ्नश्च, स्तम्बघनः, स्त्रियां स्तम्बहा, स्तम्बघ्नेति। ५-३-४० परे-
र्घः करणे। २-३-१०३ परेर्घाङ्कयोगे वा रो लः। ५-३-४१
ह्वः समाह्वयाह्वयौ द्यूतनाम्नोः। ५-३-४२न्यभ्युपवेर्वाश्चोत्,
निहवः, यङ्लुपि विजोहवः। ५-३-४३ आङो युद्धे, आहवः
।५-३-४४ आहावो निपानं। ५-३-४५ भावेऽनुपसर्गात्
वाश्चोत्, हवः। ५-३-४६ हनो वा वध् च, वधः, घञि घातः
।५-३-४७ व्यधजपमद्भ्यः भावाकर्त्रोः, मदः। ५-३-४८
नवा क्वणयमहसस्वनः, यमः यामः। ५-३-४९ आङो
रुप्लोः वाऽऽल्लु।५-३-५० वर्षविघ्नेऽवाद् ग्रहः। ५-३-५१ प्राद्र-
श्मितुलासूत्रे, प्रग्रहः प्रग्राहः। ५-३-५२ वृगो वस्त्रे, घञ्यु-
पेत्यनेन प्रावारः प्रवरः, प्राङ इति। ५-३-५३ उदः श्रेः, उच्छ्रायः
।५-३-५४ युपुद्रोर्घञ्, उद्यावः। ५-३-५५ ग्रहः, उद्ग्राहः
।५-३-५६ न्यवाच्छापे। ५-३-५७ प्राल्लिप्सायाम्।५-३-५८
समो मुष्टौ, संग्राहः मुष्टिदार्ढ्ये। ५-३-५९ युदुद्रोः, संदावः
।५ ३-६० नियश्चानुपसर्गाद्वा, यावः यवः नयः नायः। ५-३-६१
वोदः, उन्नयः उन्नायः। ५-३-६२ अवात्।५-३-६३ परेर्द्यूते,
परिणायः। ५-३-६४। भुवोऽवज्ञाने वा परेः। ५-३-६५ यज्ञे
ग्रहः परेः। ५-३-६६ संस्तोः यज्ञे। ५-३-६७ प्रात् स्नुद्रुस्तोः,
बाहुल्यात् स्रावः। ५-३-६८ अयज्ञे स्त्रः प्रात्, नयप्रस्तारः
।५-३-६९ वेरशब्दे प्रथने, विस्तारः।५-३-७० छन्दोनाम्नि,

विष्टारः, प्राङ्भ्यामपि। २-३ २३ वेः स्त्रः पः नाम्नि।५-३-७१ क्षुश्रोः, विश्रावः।५--३--७२ न्युदो ग्रः, निगारः। ५--३--७३ किरो धान्ये न्युदः।४-४-९६ वौ विष्किरो वा।५-३-७४ नेर्वुः, नीवारः धान्यं, न क्तिः। ५--३--७५ इणोऽभ्रेषे, न्यायः। ५-३-७६ परेः क्रमे, पर्यायः ५-३-७७ व्युपाच्छीङः क्रमे, शयः विशायः।५--३--७८। हस्तप्राप्ये चेरस्तेये, फलोच्चायः, नोत्र इति।५--३--७९ चितिदेहावासोपसमाधाने ( उपर्युपरि राशीकरणं ) कश्चादेः, कायः निकायः, आदि वेति निकेचायः परिकायः, बहुत्वमात्रे काष्ठनिचयः। ५--३--८० संघेऽनूर्ध्वे च, तार्किकनिकायः, उत्कृष्टे सारसमुच्चयः प्रमाणसमुच्चयः।५-३-८१ माने धातोः घञ्, एको निघासः, क्त्वा बाधात् प्रसृतिः।५-३ ८२ स्थादिभ्यः कः, प्रस्थः संस्था व्यवस्था प्रस्नः प्रपा विधः विघ्नं आयुधं आढ्यः, नानट्, बाहुल्याद् घातोपघाताद्याः।५-३ ८३ ट्वितोऽथुः, नन्दथुः क्षवथुः क्षवः नन्दः। ५-३-८४ ड्वितस्त्रिमक् तत्कृते, कृत्रिमं। ५-३-८५ याजिस्वपिरक्षियतिप्रच्छो नः, प्रश्नः। ५--३--८६ विच्छो नङ्, विश्नः।५-३-८७ उपसर्गाद्दः किः, प्रधिः निधिः समाधिः।५--३--८८ व्याप्यादाधारे, उदधिः।५-३-८९अन्तर्द्धिः।५-३-९० आभिव्याप्तौ भावेऽनञिन्, संरवणं सांराविणं वा सेनायां, क्तादिनिवृत्तयेऽनः। ५-३-९१ स्त्रियां क्तिः, भूतिः, गर्गादित्वात्संकृतिः, ( १२२ यावत् )। ४--२--६६ अपाचायः चिः क्तौ।५-३-९२ श्रवादिभ्यः, श्रुतिः प्रतिश्रुत् स्तुतिः, पद्सद्विद्लभशंसपचइषयजमन्आसभृगः, प्रमितिः, क्विबादिभिः समावेशाय। ५--३--९३ समिणासुगः, समितिः आसुतिः, अन्यत्र क्यप्। ५-३-९४ सातिहेतियूनिजूतिज्ञप्तिकीर्तिः।४--४--३३ तेर्ग्रहादिभ्य आदिरिट्, निगृहीतिः। ५--३--९५

गापापचो भावे, प्रगीतिः, नाङ्। ५--३--९६ स्थो वा भावे, प्रस्थितिः आस्था। ५--३--९७ आस्यटिव्रज्यजः क्यप् भावे ।५-३-९८ भृगो नाम्नि भावे। ५--३--९९ समजनिपन्निषद्-शीङ्सुग्विदिचरिमनीणः क्यप्, मन्या इत्या। ५-३-१०० कृगः श च वा, क्रिया कृत्या कृतिः। ५-३-१०१ मृगयेच्छा-याच्ञातृष्णाकृपाऽऽभाश्रद्धाऽन्तर्द्धा,इच्छा, भावे।५-३-१०२ परेः सृचरेर्यः, परिचर्या, भाव इति उत्तरत्रापि। ५-३-१०४ वाऽटाट्यात्, अटाट्या, अप्रत्यये अटाटा। ५-३-१०३ जागु-रश्च, जागरा जागर्या, भाव एवेति। ४-३-१०५ शंसिप्रत्ययात्, प्रशंसा गोपाया कण्डूया चिकीर्षा पुत्रीया गवा लोलूया पोपूया ।५--३--१०६ क्तेटो गुरोर्व्यञ्जनात्, ईहा उक्षा शिक्षा कुण्डा ।५-३-१०७ षितोऽङ्, क्षमा जरा, प्राकरणिकाप्राकरणिकयोः प्राकरणिकस्येत्यनित्य इत्यङि गुणः। ५-३-१०८ भिदादयः,

छिदा विदा मृजा क्षिपा दया रुजा, चुरा अनित्यो णिच्चुरादेः, पृच्छा, ऋहृकृधृतृभ्यः संज्ञायां वृद्धिश्च, गुहिकुहिवशिवपि-तुलिक्षपिक्षिभ्यश्च संज्ञायां, रिखिलिपिशुभिसिधिमिधिगुधेः संज्ञायां गुणश्च, अकृतस्य क्रिया चैव, प्राप्तेर्बाधनमेव च। अधि-कार्थविवक्षा च, त्रयमेतन्निपातनात् ॥ १ ॥ ५-३-९ भीषि-भूषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यः ण्यन्ते-भ्यः, पूजा चर्चा, अङधिकारात् अनित्ये णिलोपे चिन्तिया पूज्या, त्रहुत्वात्पीडा ऊना। ५--३--११० उपसर्गादातः, उपदा संधा प्रमा। ५--३--१११ णिवेत्त्यासश्रन्थघट्टवन्दे-रनः, कारणा वंदना, ग्रन्थेरपि। ५--३--११२ इषोऽनि-च्छायां, बाहुल्यात् प्राणैषणादि। ५-३-११३ पर्यधेर्वा, पक्षे क्तिः, नाधीष्टिरिति। ५-३-११४ कृत्संपदादिभ्यः क्विप्, कुत् युत् क्षुत् तृद् त्विद् रुद् रुक् शुक् मुद् मृत् गिर् त्रा दिक् स्रक्

संपद् विपद् संसद् विवित् प्रशीः आशीः उपानत् प्रावृट् विप्रुट् नीवृत् संयत् समित् उपभृत्। ५-३-११५ भ्यादिभ्यो वा क्तिः, भीहीभूलूकृभिद्छिद्तुद्दृश्नशृयुजज्वरित्वरिअवस्त्रिविभवनुशक॥ ५--३--११६ व्यतिहारे ( परस्परस्य कृतप्रतिकृतिः )-ऽनीहारादिभ्यो ञः, व्याक्रोशी व्यातिचारी व्यात्युक्षी, बाहुल्याद्भावे न क्त्यादयः, व्युत्युक्षेति। ५--३--११७ नञोऽनिः शापे, अजननिः। ५-३-११८ ग्लाहाज्यः, ग्लानिः, म्लानिर्जीनिरपि च। ५-३-११९ प्रश्नाख्याने वेञ्, कारिं क्रियां कृतिं वा मा कार्षीः। ५--३--१२० पर्यायार्हर्णोत्पत्तौ च णकः, भवतः शायिका, अर्हति भक्षिकां, उदपादि भक्षिका, चात्प्रश्नादौ। ५-३-१२१ नाम्नि पुंसि च, प्रच्छर्दिका प्रवाहिका विपादिका सालभञ्जिका, बाहुल्यात् शिरोऽर्दनं अरोचकः। ५-३-१२२ भावे धात्वर्थनिर्देशे णकः, आसिका, बाहुल्यात् ईहा ऊहा। ५-३-१२३ क्लीबे क्तः भावे, हसितं, सकर्मकादपि, भवता भुक्तमोदनं, असितमिति। ५--३--१२४ अनट् क्लीबे भावे, गमनं परिनदनं भोजनं प्रलपणं। ४--२- ११२ ष्ठिवासिवोरनटि वा दीर्घः। ५-.३--१२५ यत्कर्मस्पर्शात्कर्त्रङ्गसुखं ततः, पयःपानं सुखं, नित्यसमासार्थं सप्तमीतसौ, राजभोजनाः शालयः। ५-३-१२६ रम्यादिभ्यः कर्त्तरि, कमनंदशातयः,हलादनी इध्मव्रश्चनः। ५-३-१२७ कारणं कर्त्तरि। ५-३-१२८ भुजिपत्यादिभ्यः कर्मापादाने यथासंख्यं, निरदनं अवस्रावणं असनं वसनं प्रपतनः निर्झरणः प्रस्रवणं अपादानं। ५-३-१२९ करणाधारे, ( १३७ यावत् ) एषणी लेखनी शयनं आसनं अधिकरणं। ५-३-१३० पुंनाम्नि घः करणाधारे, अपवादात् कचिदुत्सर्गोऽपीति प्रच्छदः, बाहुल्यात् प्रसाधनः। ४-२-३४ एकोपसर्गस्य च घे छदेर्णौ ह्रस्वः, चादनुपसर्गस्य, प्रणयः प्रत्ययः शरः-आकरः भवः प्रहरः। ५-३-१३१

गोचरसंचरवहव्रजव्यजखलापणनिगमबकभगकषाकष-निकषं करणाधारयोः पुंनाम्नि, बके कर्त्तरि भगे च क्लीबे बहुलत्वात् घः, अपवादादुत्सर्ग इति निपातनं, व्यजे नाजेर्वी । ५--३--१३२ व्यञ्जनाद् घञ्, वेदः लेखः रागः। ५--३--१३३ अवात् तॄस्तृभ्याम्, अवतारः, स्त्री बाहुल्यादसंज्ञायां नित्यं, भावाकर्त्रोः स्त्री वेति। ५-३-१३४न्यायावायाध्यायोद्यावसंहारावहाराधारदारजारं, जारः कर्त्तर्यपि। ५--३--१३५उदङ्कोऽतोये, न घः। ५--३--१३६ आनायो जालं। ५-३-१३७खनो डडरेकेकवकघं च, चात् घञ्, आखनिकवकः। ५-३-१३८ इकिश्तिव् स्वरूपार्थे, भञ्जिः वेत्तिः, अर्थे यजेरज्ञानि। ५-३-१३९ दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात्खल् भावकर्मणोः, दुष्करः सुकरं अलंकृत्वा अलंरुदितेन प्रकृत्य ईषत्करः ईषन्निमयः दुर्दरिद्रं। ४-४--१०८ सुदुर्भ्यः लभः खल्घञोः स्वरान्नोऽन्तः, सुलम्भः, उपसर्गादिति सुलभं। ४--४--१०७ उपसर्गात्खल्घञोश्च, चात् जिख्णमोः, प्रलम्भं प्रलम्भं। ५--३--१४०च्व्यर्थे कर्त्राप्यात् भूकृगः, दुःखेनानाढ्येनाढ्येन भूयते दुराढ्यंभवं भवता, दुराढ्यंकरो मैत्रो भवता। ५--३--१४१ शासुयुधिदृशिधृषिमृषातोऽनः कृच्छ्राकृच्छ्रार्थदुःस्वीषत्पूर्वेभ्यः भावकर्मणोः, दुःशासनः सुपानं, अनादन्तात् विकल्पोऽपि। ४-१-७६ ज्यश्च यपि न य्वृत्, चाद् वेः, प्रवाय प्रज्याय। ४-१-७७ व्यः, अनुव्याय। ४-१-७८ संपरेर्वा, संव्याय संवीय, समो नित्यं नेत्यपि च। ४-१-१०६ क्रमः क्त्वि वा दीर्घः, क्रान्त्वा क्रन्त्वा क्रमित्वा। ४-३-२३ जनशो न्युपान्त्ये तादिः क्त्वा किद्वा, रङ्क्त्वा रक्त्वा विरज्य नंष्ट्वा नष्ट्वा ४-३-२४ ऋतृषमृषकृशवञ्चलुञ्चथफः सेट् क्त्वा किद्वा, श्रथित्वा श्रन्थित्वा, लुञ्चेः क्त्वापि। ४-३-२९ क्त्वा सेट् न कित्, देवित्वा, आशास्य

आशासित्वा आशास्त्वा निमाय। ४--३--३० स्कन्दस्यन्दः न क्तित्, स्कन्त्वा स्यन्दित्वा, न यपि चेत् कृत्त्वेति। ४-३ ३१ क्षुधक्लिशकुषगुधमृडमृदवदवसः सेट् क्त्वा कित्, क्षुधित्वा, क्षुत्त्वेति। ४-३-८६ लघोर्यपि णेरय्, प्रशमय्य, विधेरेकवर्णान्तरे प्रतिपाद्य। ४-३-८७ वाप्नोः, प्रापय्य प्राप्य, आप्लृणोऽपि, उपगूय, ग्यृद् ग्यृदाश्रयं च प्राकृताद्धलन्तदिति न ह्रस्वस्येति, इङोऽध्याप्य, तकि तु ग्यृद्दीर्घते। ४--३--८८ मेङो वा मित्, अपमित्य। ४-३-८९ क्षेः क्षीः, प्रक्षीय। ४-४-१४ हाको हिः क्त्वि, हित्वा, हाङो हात्वा, द्वित्वे जहित्वा, जाहित्वेति, विहाय निधाय निपाय हित्वा दाधित्वा, यङ्लुपि दोसोहाकूधागां नेङिति।४-४-४१ जॄवॄश्च्यः क्त्व इट्, जरित्वा व्रश्चित्वा, जॄषो जीर्त्वा, अस्यैवेति। ४-२-५६ यपि हनिमनिवनतितनादेर्लुक्, निहत्य।४-२--५७ वा मः यमिरमिनमिगमीनां लुक्, विरम्य विरत्य।५-४-४९ पूर्वाग्रेप्रथमे खणम्वा, पूर्वं भोजं पूर्वं भुक्त्वा वा व्रजति, तुल्यकर्तृके प्राक्काले, पूर्वं भुज्यते ततो व्रजति, व्यापारान्तरापेक्षया प्राक्काल्ये पूर्वादयो न व्रज्यापेक्षया। ५--४--५० अन्यथैवंकथमित्थमः कृगोऽनर्थकात् वा, अन्यथाकारं कृत्वा भुङ्क्ते।५-४-५१ यथातथादीर्ष्योत्तरे कृगो, यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तव?। ५--४--५२ शापे व्याप्यात्, चौरंकारमाक्रोशति, चौरशब्दमुच्चार्येत्यर्थः।५-४-५४ स्वाद्वर्थाददीर्घात्, मिष्टंकारं भुङ्क्ते। ५--४--५५ यावतो विन्दजीवः कार्त्स्न्ये एककर्तृके णम्वा प्राक्काले, यावद्वेदं भुङ्क्ते।५-४-५६ चर्मोदरात्पूरेः, चर्मपूरं आस्ते।५-४-५७ वृष्टिमान ऊ लुक् चास्य पूरेः, गोष्पदप्रं वृष्टो देवः, अस्य ग्रहणाद् उप-

पदस्य न, तेन मूषकबिलपूरं, अव्ययत्वात् गोष्पदप्रंतरं, गोष्पदप्रेणेत्याद्या डाद्यन्ताः। ५-४-५८ चेलार्थात् क्नोपेः, वस्त्रक्नोपं, अर्थोक्तेः स्वरूपपर्यायविशेषात्। ५-४-५९ गात्रपुरुषात्स्नः, अन्तर्भूतण्यर्थात्, गात्रस्नायं वृष्टो देवः। ५-४-६० शुष्कचूर्णरूक्षात् पिषस्तस्यैव प्रयोगे, शुष्कपेषं पिनष्टि, सामान्यविशेषविवक्षया क्रियाभेदात् क्त्वेति। ५-४-६१ कृग्ग्रहोऽकृतजीवात्, अकृतकारं करोति, जीवग्राहं गृह्णाति। ५-४-६२ निमूलात्कषः, निमूलकाषं कषति, अव्ययेऽव्ययीभावो बहुव्रीहिर्वा। ५-४-६३ हनश्च समूलात् (साकल्ये) चात्कषः, समूलघातं हन्ति। ५-४ ६४ करणेभ्यः, अस्युपघातं हन्ति, बहुत्वाद् हिंसार्थाद्। ५-४-६५ स्वस्नेहनार्थात् पुषपिषः, धनपोषं पुष्णाति, घृतपेषं पिनष्टि। ५-४-६६ हस्तार्थाद्ग्रहवर्तिवृत्तेः, करवर्तं वर्तयति, अण्यन्तादिति। ५-४-६७ बन्धेर्नाम्नि, क्रौञ्चबन्धं बद्धः। ५-४-६८ आधारात्, चक्रबन्धं बद्धः, बाहुल्याद्ग्रामे बद्धः। ५-४-६९ कर्त्तुर्जीवपुरुषान्नश्वहः, पुरुषवाहं वहति। ५-४-७० ऊर्ध्वात्पूःशुषः, ऊर्ध्वपूरं पूर्यते। ५-४-७१ व्याप्याच्चेवात्, चात्कर्त्तुः तस्यैव प्रयोगे, ओदनपाचं पक्वः, जमालिनाशं नष्टः। ५-४-७२ उपात्किरो लवने, उपस्कारं लुनन्ति। ५-४-७३ दंशेस्तृतीयया योगे, मूलकोपदंशं मूलकेनोपदंशं वा भुङ्क्ते, प्रधाना भुजिक्रिया, करणं च तस्या मूलकः, अवयवक्रिया भेदे क्त्वा द्वितीया च। ५-४-७४ हिंसार्थादेकाप्यात्, दण्डेनोपघातं गाः सादयति। ५-४-७५ उपपीडरुधकर्षस्तत्सप्तम्या, व्रजेन व्रजे वोपरोधं गाः सादयति, कामचारेण रुधकर्षाभ्यां कृग्तेरपिचेति। ५-४-७६ प्रमाणसमासत्त्योः तृतीयया सप्तम्या च, द्व्यङ्गुलोत्कर्षं छिनत्ति, केशग्राहं युध्यन्ते। ५-४-७७ पञ्चम्या त्वरायां, शय्योत्थायं धावति। ५-४-७८ द्वितीयया, अस्यपगारं युध्यन्ते। ४-२-५वापगुरोर्णमि आः। ५-४-७९ स्वाङ्गेनाध्रुवेण, भ्रूविक्षेपं जल्पति। ५-४-८० परिक्लेश्येन, उरः प्रतिपेषं युध्यन्ते,

ध्रुवमुरः। ५-४-८१ विशपतपदस्कन्दो वीप्साभीक्ष्ण्ये, नाम्नि वीप्सा क्रियायामाभीक्ष्ण्यं, गेहं गेहं अनुप्रवेशं गेहमनुप्रवेशमनुप्रवेशं वा गेहानुप्रवेशमास्ते, वीप्सायामुपपदस्येतरत्र धातोश्च द्वित्वं, समासेनोक्तत्वान्न द्वित्वं। ५-४-८२ कालेन तृष्यस्वः क्रियान्तरे द्वितीयया, द्व्यहं तर्षं द्व्यहंतर्षं पिबन्ति, अन्तर्मुहूर्त्तात्यासं सम्यक् पश्यन्ति ( मिथ्यात्वमनुभूय )। ५-४-८३ नाम्ना ग्रहादिशः द्वितीयया, नामादेशं दत्ते। ५-४-८४ कृगो ऽव्ययेनानिष्टोक्तौ क्त्वाणमौ, पुत्रस्ते जातः किं तर्हि वृषल! नीचैः कृत्वा नीचैः कृत्य नीचैः कारं वा अदसि ?, समासार्थं क्त्वा उभयानुवृत्त्यर्थं च णम्। ५-४-८५ तिर्यचाऽपवर्गे (णमास्तौ), तिर्यक्कृत्य तिर्यक्कृत्वा तिर्यक्कारं वाऽऽस्ते। ५-४-८६ स्वाङ्गतश्च्व्यर्थे नानाविनाधार्थेन भुवश्च, मुखतः भूत्वा भूय भावं कृत्वा कृत्य कारं वा आस्ते, तुल्यकर्तृकेऽर्थे धण पीति। ५-४-८७ तूष्णीमा। ५-५-८८ आनुलोम्येऽन्वचा क्त्वाणमौ भुवः॥

॥ इति कृदन्ताः ॥

## अथाष्टमोऽध्यायः प्राकृतरूपः

८-१-१ अथ प्राकृतं, अनुक्तं संस्कृतवत्, ऋॠऌॡऐऔङञशषविसर्गप्लुता अस्वरं व्यञ्जनं द्विवचनं चतुर्थीबहुवचनं च नात्र, स्याताम् ङञौ स्ववर्ग्ययुतौ। ८-१-२ बहुलं, प्रवृत्तीतरोभयान्यैः। १-३ आर्षं, बहुलमेव। इति संज्ञा ॥ १-८४ ह्रस्वः संयोगे दीर्घस्य। २-२४ द्यय्यर्यां जः। २-८९ अनादौ शेषादेशयोर्द्वित्वं, अज्जो। १-८५ इत एद्वा संयोगे। २-७५ सूक्ष्मश्नष्णस्नह्नह्लक्ष्णां ण्हः, वेण्हू विण्हू। १-११८ अदूतः सूक्ष्मे वा, सण्हं सुण्हं। १-११६ ओत्संयोगे उतः। २-४५ स्तस्य थोऽसमस्तस्तम्बे। १-७६ स्वरादसंयुक्तस्यानादेरित्यधिकृत्य। १-१७७ कगचजतदपयवां प्रायो लुक्,

पोत्थओ । १-१२६ ऋतोऽत् आदेः। १-१८० अवर्णे यश्रुतिः अवर्णात्कादेर्लुकि, घयं। १-१४० रिः केवलस्य ऋतः, रिद्धी। २-४१ श्रद्धर्द्धिमूर्धार्धेऽन्ते वा ढः। १-१२८ इत् कृपादौ ऋतः, हियर्य, दिट्ठी मिट्ठं सिट्ठी गिण्ठी पिच्छी भिऊ भिङ्गो भिङ्गारो सिङ्गारो सिआलो घुसिणं विणा विद्धकई समिद्धी इद्धी गिद्धी किसो किसाणू किच्छं तिप्पं निवो किई। २-१३१ धृते-र्दिहि वा, धिई किवाणं विञ्छिओ वित्तं वाहियं विहिओ विसी इसी विइण्हो। २-२३ स्पृहायां संयुक्तस्य छः, छिहा सई उक्किट्ठं इट्ठी इद्धी। १-२६९ किसलयकालायसहृदये यो वा लुक्, हिअं। २-१५ त्वथ्वद्ध्वां चछजझाः क्वचित्, पिच्छी।१-४४ अतः समृद्ध्यादौ वाऽऽदेराः, सामिद्धी पायडं । १-१५ स्त्रियामादविद्युतः अन्त्यव्यञ्जनस्य, पाडिवआ पासुत्तं। १-९५ प्रवासीक्षौ उदितः, पावासुओ उच्छू लच्छी कच्छो । १-११२ ई क्षुते, छीयं सारिच्छो वच्छो मच्छिआ छेत्तं। १--१७ क्षुधो हान्त्यस्य, छुहा दच्छो कुच्छी वच्छं छुण्णो कच्छा छारो।१-१६१ कौक्षेयके वौत उत्, कुच्छेयअं । १-१६२ अउः पौरादौ च, कउच्छेअयं, पउरो पउरजणो कउरवो कउसलं। १-१११ पुरुषे रोरुत इत्, पउरिसं सउहं गउडो मउली मउडं सउरा कउला। छुरो उच्छा छअं सारिच्छं ( श्यं )। १-२६ वक्रादावन्तः स्वरादनुस्वारः, वंकं तंसं अंसू। २-८६ आदेः श्मश्रुश्मशाने लुक्, मंसू, पुंछं गुंछं मुंधं (मूर्धन्) पंसू बुंधं कंकोडो । २-५२ ड्मक्मोः पः, कुंपलं दंसणं विंछिओ। २-२१ ह्रस्वात् थ्यश्च-त्सप्सामनिश्चले छः । २--१६ वृश्चिके श्चेर्ञ्चुर्वा, विंचुओ विंचुवो गिंठी मंजारो। २--१३२ मार्जारस्य मंजरवंजरौ वा, मज्जारो वयंसो माणंसी माणंसिणी मणंसिला । १--८८ पथिपृथिवीप्रतिश्रुन्मूषिकहरिद्राबिभीतकेष्वत् आदेरितः, पहो । १--१३१ उहत्वादौ ऋतः, उऊ परामुट्ठो पुट्ठो पउट्ठो ।१-२९६ निशीथपृथिव्योर्वा ढः, पुढवी पुहवी पउत्ती। १-१९

दिक्प्रावृषोः सः, पाउसो। १-३१ प्रावृट्शरत्तरणयः पुंसि।१--१८ शरदादेरत्, सरओ भिसओ पाउओ सुई पहुडि पाहुडं निहुअं निउअं विउअं संवुअं वुत्तंतो निव्वुई वुन्दावणो वुड्ढो उसहो। १--१३२ वृषभे वा वोत् ऋतः, वसहो उसहो।१-१४१ ऋणर्ज्वृषभर्त्वृषौ वा रिः ऋतः, रिणं रिसहो मुणालं।२--९८ तैलादौ द्वित्वं, उज्जू। १--२३३ प्रभूते वः, वहुत्तं।१-१६६ स्थविरविचकिलायस्कारे परेण सस्वरव्यञ्जनादेः स्वरस्य एत्, थेरो एक्कारो वेइल्लं सोत्तं पिम्मं जोव्वणं उजू रिजू जामाउओ भाउओ पिउओ। २-११२ तन्वीतुल्येषु संयुक्तान्त्यात्पूर्व उत्, पुहुवी। १--२०६ प्रत्यादौ डः तः, पडंसुआ। १--२०८ गर्भितातिमुक्तके णः तः। १--१७८ यमुनाचामुण्डाकामुकातिमुक्तके मोऽनुनासिकश्च, चात् लुक्, अणिउँतयं अइमुत्तयं। १--२३१ पो वः, वावडो पडाआ वहेडओ।१-१०५ एत्पीयूषापीडविभीतककीदृशेदृशे ईतः। १-२३४

नीपापीडे मो वा पः, आमेडो। १--१४२ दृशेः क्विप्टक्सकः रिः, केरिसो एरिसो। १--२५४ हरिद्रादौ लो रः।२-२४ छायाहरिद्रयोर्चा डी।१-२४९ छायायां होऽकान्तौ वा, छाही हलिदी दालिदो हलिदो जहुट्ठिलो। १-९६ युधिष्ठिरे वा उदितः। १--१०७ उतो मुकुलादिष्वत्, मउलं। १--१९५ टो डः, मउडं अगरुं गरुई जहिट्ठिलो। २--६८ पर्यस्तपर्याणसौकुमार्ये ल्लः र्यस्य। २-४७ पर्यस्ते थटौ स्तस्य, पल्लत्थं पल्लट्टं पल्लाणं। २-२५२ पर्याणे डा वा रः, पडायाणं सोअमल्लं।१--१२४ ओत् कूष्माण्डीतूणीरकूर्परस्थूलताम्बूलगुडूचीमूल्ये ऊतः। २--७३ कूष्माण्ड्यां ष्मो लस्तु ण्डो वा हः।१--२०२ डो लः, कोहण्डी कोहली तोणीरं कोप्परं। १--२५५ स्थूले लो रः, थोरं। २--९९ सेवादौ वा द्विः, सेव्वा।१-१०६ नीडपीठे वैदीतः, नेड्डं। १-१९९ ठो ढः, पेढं नक्खा।१-२२९ वादौ नो णः, णिहित्तो वाहित्तो।१-१२७ आत्कृशा-

मृदुकमृदुत्वे वा ऋतः, कासा। २-२ शक्तमुक्तदष्टरुग्ण-
मृदुत्वे क्को वा संयुक्तस्य, माउक्कं मउत्तणं एक्को। १--११७
कुतूहले वा ह्रस्वश्च ओत् उतः, कोउहल्लं। १-१२१ उद्भ्रूहनू-
मत्कण्डूयवातूले ऊतः। २-१६७ भ्रुवो मयाडमया, भुमया
भमया वाउल्लो थुल्लो हत्तो। १-१५२ एच्च दैवे चादइः ऐतः,
दइव्वं तुण्हिक्को मुक्को। २-७ स्थाणावहरे स्थः खः, खाणू
। २--३३ स्त्यानचतुर्थार्थे वा ठः संयुक्तस्य। १-७४ ईस्त्यान-
खल्वाटे आदेरातः, थिण्णं ठीणं चउट्ठो अट्ठो अम्हकेरं ताच्चिअ
सोच्चिअ तंबोलं गलोई। १-८९ शिथिलेङ्गुदे वाऽऽदेरितोऽत्।
१-२१५ मेथिशिथिरशिथिलप्रथमे थस्य ढः। १-५५ प्रथमे
प्रथोर्वा उः, पुढुमं पढुमं सढिलो मुहलो वलुणो कलुणो। १-४७
पक्वाङ्गारललाटे वाऽऽदेरिः, पिक्कं। १--२५७ ललाटे च
आदेर्लस्य णः। २-१२३ ललाटे लडोर्व्यत्ययो वा, णिडालं
णिलाडं इंगालो सक्कालो। १-१७१ नवा मयूहलवणचतुर्गुण-

चतुर्थचतुर्दशसुकुमारकुतूहलोदूखलोलूखले आदेः स्व-
रस्य परेण सस्वरव्यञ्जनेनौत्, मोहो। १-२६२ दशपाषाणे हः
शषोः, चोद्दह सोमालो कोहलं। १--१८३ किराते चः कः,
चिलाओ। १--२३२ पाटिपरुषपरिघपरिखापनसपारिभद्रे
फः पः, फलिहो फलिहा फालिहद्दो। १-२१४ वितास्तिवसति
भरतकातरमातुलिङ्गे हः तः, काहलो लुको अवद्दालं।१-२४४
भ्रमरे सो वा मः, भसलो जढलो बढलो निट्ठुलो। १--९९
हरितक्यामितोऽत्, हरडई मडअं। १-१०८ वोपरौ उतोऽद्,
अवरिं पारोहो पावासू।१-४६ इः स्वप्नादौ अतः।२-१०८ स्वप्ने
नात् पूर्व इत्। १--२५९ स्वप्ननीव्योर्वा वो मः, सिविणो
सिमिणो ईसी।१ -२०७ इत्त्वे वेतसे तो डः, वेडिसो।१--१०१
पानीयादिष्वित् ईतः, पाणिअं विलिअं जियइ करिसो सिरिसो
।१-९४ द्विन्योरुदितः, दुइअं तइअं गहिरं उवणिअं। १-२२१
प्रदीपिदोहदे लः दः, पलिविअं। १--२१७ दशनदष्टदग्ध-

दोलादण्डदरदाहदम्भदर्भकदनदोहदे वा दो डः, डोहलो ।२-३४ ष्टस्यानुष्ट्रेष्टासंदष्टे ठः । २-११९ महाराष्ट्रे हरोर्व्यत्ययः । १-६९ महाराष्ट्रे वाऽत् आदेरातः, मरहट्टो । २-४० दग्धविदग्धवृद्धिवृद्धे ढः, दड्ढो । १-१७२ अवापोते सस्वरव्यञ्जनेनौत्, ओसिअन्तं पसिअं गहिअं वम्मिओ तआणिं विअणं । १-१२७ इदुतौ वृष्टवृष्टिपृथक्मृदङ्गनप्तृके ऋतः ।१-१८८ पृथक्कि धो वा थः, पिधं पुहं । १-२४ वा स्वरे मश्च अनुस्वारो मस्य, अन्यस्यापि, सक्खं जंतं । १-५२ ध्वनिविष्वचोरुरस्य, विसुं सम्मं इहं । १ ४० त्यदाद्यव्ययात्तत्स्वरस्य लुक्, अम्हेत्थ । १-१४५ क्लृत इलिः क्लृप्तक्लिन्ने, किलित्तं किलिन्नं । १-१४८ ऐत एत् । १-१५० सैन्ये वा इरैतः ।२-१ संयुक्तस्येत्यधिकृत्य । २-७८ अधो मनयां लुक्, सिन्नं सेन्नं । १-१५१ अइर्दैत्यादौ, सइन्नं दइन्नं अइस्सरिअं । २-१०७ स्याद्भव्यचैत्यचौर्यसमे यात् पूर्व इत् । २-७७ कगटडतदपशषस ≍क )( पामूर्ध्वं लुक् इति प्राप्ते २-७९ सर्वत्र लवरामचन्द्रे लुक् । १-४३ लुप्तयवरशषसां शषसां दीर्घः आदेः । २-९२ न दीर्घानुस्वारात् द्विः, अईसारिअं भइरवं वइसवणो दइवयं वइआलिअं । १-२६० शषोः सः, वइएसो वइएहो । २-९० द्वितीयतुर्ययोरुपरि पूर्वः द्वित्वे, वइदब्भो ।१-२२८ नो णः, वइस्साणरो । १-२५० डाहवौ कतिपये यः, कइवाहं कइअवं । १-१८७ खघथधभां हः, वइसाहो वइसालो सइरं चइत्तं । २-१३ त्योऽचैत्ये च इति निषेधान्न चः, दइच्चो ।१-१५९ औत आत्, कोमुई । १-१० लुक् स्वरस्य स्वरे, नीसासूसासा । १-११४ अनुत्साहोत्सन्ने त्सच्छे आदेरुत्, उच्छवो । १-११ अन्त्यव्यञ्जनस्य लुक् । १-१२ न श्रदुदोः । १-१३ निर्दुरो वा लुक् । १-९३ लुंकि निरः ईदितः । १-११५ लुंकि दुरो वोत्, दुहओ । १-१९२ ऊत्वे दुर्भगसुभगे वः गस्य, दूहवो ॥ इति स्वरसन्धिः ॥

## ॥ अथासंधिः ॥

।१-५ पदयोः सन्धिर्वा, दहि ईसरो दहीसरो। १-६ न युवर्णस्यास्वे। २-१०५ शर्षतप्तवज्रे वा संयुक्तान्त्यात्पूर्व इः, वन्दामि अज्जवइरे। १-२६७ लुग्भाजनदनुजराजकुले जः सस्वरस्य नवा, दणुइंदरुहिरलित्तो, भाणं।१-८ स्वरस्योद्वृत्ते स्वरे, राउलं।१-७ एदोतोः स्वरे, अहो अच्छरिअं।१-५८वल्ल्युत्करपर्यन्ताश्चर्ये वाऽत एत्। २-६५ एतः पर्यन्ते र्यस्य रः, पेरन्तो। २-९३ रहोर्न द्वित्वं। २-६६ आश्चर्ये एतो र्यस्य रः। २-६७ अतो रिआररिज्जरीअं आश्चर्ये र्यस्य। १-९ त्यादेः स्वरस्य, होइ इह ॥ इत्यसन्धिः ॥

## ॥ अथ व्यञ्जनसन्धिः ॥

१--१४ स्वरेऽन्तरश्च निर्दुरोर्वा लुक्। १--२५ ङञणनो व्यञ्जनेऽनुस्वारः, अंतरप्पा।१-३० वर्गेऽन्त्यो वा, अन्तरप्पा। १-२३मोऽनुस्वारोऽन्त्यस्यानन्त्यस्यापि, वणंमि। १-२८ विंशत्यादेर्लुक् अनुस्वारस्य। १--९२ ईर्जिह्वासिंहत्रिंशद्विंशतौ त्येतः, वीसा। २-५७ ह्वो भो वा, जिब्भा। १-२९ मांसादेर्वा लुगनुस्वारस्य, मासं कासं पासु कह एव। १-२७१ यावत्तावज्जीवितावर्त्तमानावटप्रावारकदेवकुलैवमेवे वः लुक्, एमेव इचेव नूण इयाणि सक्कयं ( संस्कृतं ) सक्कारो संस्कारः) दानीं कि समुहं किसुअं। १-२६४ हो घोऽनुस्वारात्, सिंघो सीहो जीहा। १-७०मांसादिष्वनुस्वारे आतोऽद्, मंसं पंसू कंसं पंडवो संसिद्धिअं संजत्तिओ। १-८० नावर्णात्पः लुक्, सवहो। १--२३६ फो भहौ, सफलं सभलं।१--२३७ बो वः, अलाउं। १-६६ अलाब्वरण्ये आदेरतो लुक्, लाउं अलावू रण्णं। १--२४५ आदेर्यो जः, जसो। २--३ क्षः खः क्वचित्तु

छज्झौ, खीणं छीणं झीणं । २-८२ तीक्ष्णे णो वा लुक्, तिण्हं तिक्खं । २-४ ष्कस्कयोर्नाम्नि खः, निक्खं खंधो । २-२६ साध्वसध्यह्यां झः, सज्झसं झाणं । २-१२४ ह्य ह्योर्व्यत्ययः, गुज्झं गुय्हं । २-३० र्त्तस्याधूर्त्तादौ टः, वट्टुलं धुत्तो कित्ती वत्ता आवत्तणं वत्तिआ कत्तिओ कत्तरी मुत्ती मुहुत्तो । २-४२ म्नज्ञोर्णः, निण्णं।१-५६ ज्ञो णत्वेऽभिज्ञादावुरतः, अहिण्णू सव्वन्जो।२-८३ज्ञो ञः लुक्, जाणं। २-५३ ष्पस्पयोः फः,पुप्फं फंदणं। २-६१ न्मो मः, जम्मो । २-६२ ग्मो वा मः, जुम्मं जुग्गं। २-७४ पक्ष्मश्मष्मस्मह्मां म्हः, पम्हाइं गिम्हो।१-१०० आत्काश्मीरे ईतः। २-६० काश्मीरे म्भो वा श्मः, कम्हारो कम्भारो विम्हओ। १-५९ ब्रह्मचर्ये चः एदतः । २-६३ ब्रह्मचर्यतूर्यसौन्दर्यशौण्डीर्ये र्यो रः, बम्भचरिअं, ह्यो म्भोऽपि बम्भचेरं। १-५७एच्छय्यादौ, सेज्जा गेन्दुअं। १-१८२मरकतमदकले गः कन्दुके त्वादेः कः। १-१६० उत्सौन्दर्यादौ औतः, सुन्देरं मुञ्जायणो सुण्डो सुद्धोअणी दुवारिओ सुगन्धत्तणं पुलोमी सुवण्णिओ।२-८० द्रे रो नवा लुक्, द्रहो । २-१२० ह्रदे ह्रदोर्व्यत्ययः, दहो । १-३७ अतो डो विसर्गस्य संस्कृतलक्षणोत्पन्नस्य, अग्गओ भवंतो ॥ इति व्यञ्जनसंधिः ॥

## ॥ अथ स्वरान्तपुलिंगाः ॥

१-३३ वाऽक्ष्यर्थवचनाद्याः पुंसि, चक्खू चक्खूइं, वचनविद्युत्कुलछंदोमाहात्म्यदुःखभाजनानि । १-३४ गुणाद्याः क्लीबे वा, गुणं गुणो, बिन्दुखड्गमण्डलाग्रकररुहवृक्षाः। १-३५ वेमाञ्जल्याद्याः स्त्रियां, एसा एस वा गरिमा । १-१२९ पृष्ठे वाऽनुत्तरपदे ऋत इत्, पीठं अच्छि पण्हो

चोरिअं कुच्छी बली निही विही रस्सी गण्ठी। २-१७४ गौणाद्यः निपात्यंते, गोणो गावी गावा गावीओ। १-५८ गव्यउआअं ओतः, गउओ गाओ बइल्लो आऊ पञ्चावण्णा पणवण्णा तेवण्णा तेआलीसा विउस्सग्गो वोसिरणं बहिद्धा उक्कसिअं ( कार्यं ) कत्थई मुव्वहइ वम्हलो (अपस्मारः) कन्दुट्टं (उत्पलं) छिच्छि धिद्धि धिरत्थु पडिसिद्धी ( प्रतिस्पर्द्धा ) चश्चिक्कं ( स्थासकः ) निहेलणं मघोणो सक्खिरिणो जम्मणं महन्तो वदन्तो आशीसा वड्डअरं भिमोरो खुड्डओ घायणो वढो ककुहं अथक्कं ( अकाण्डं ) लज्जालुइणी कुड्डं ( कुतूहलं ) भट्टिओ ( विष्णुः ) करसी ( श्मशानं ) अगआ ( असुरा ) खेड्डं तिगिच्छिअल्लं ( दिनं ) पक्कले ( समर्थः ) णेलच्छो ( पण्डितः ) पलही ( कर्पासः ) उजलो ( बली ) कुसुरं ( ताम्बूलं ) छिछिइ ( पुंश्चली ) साहुली ( शाखा )। ३-२ अतः सेर्डो, देवो। ३-१३० द्विवचनस्य बहुवचनं। ३-४ जश्शसोर्लुगतः। ३--१२ जश्शस्ङसित्तोदोद्वामि दीर्घः अतः, देवा। ३--५ अमोऽस्य लुगतः, देवं। ३--१४ टाणशस्येदतः, देवे देवा। ३-६ टाऽऽमोर्णः अतः, विभक्तौ प्रायः साध्यमानावस्था, देवेण। १-१७क्त्वास्यादेर्णस्वोर्वाऽनुस्वारोऽन्तः, देवेणं। ३-७ भिसो हिहिंहिं अतः। ३-१५ भिस्भ्यस्सुपि एदतः, देवेहिं। ३--१३१ चतुर्थ्याः षष्ठी। ३--१३२तादर्थ्ये ङेर्वा। ३--१३३ वधाड्डाइश्च तादर्थ्ये, चात् षष्ठ्यपि। ३-१० ङसः स्सः अतः, देवस्स देवाणं। ३-८ङसेस्तोदोदुहिहिन्तो लुक् अतः, देवत्तो देवाहिन्तो देवा। ३-९ भ्यसस्तोदोदुहिहिन्तोसुन्तो अतः। ३-१३ भ्यसि वा दीर्घोऽतः, देवेहिन्तो देवाहिन्तो, त्तोदोदु-

पु दीर्घ एव, ङसिना सिद्धे त्तोआदिग्रहणात्। ३-११ डेम्मि ङेः अतः, देवे देवम्मि। ३ ३८ डो दीर्घो वाऽऽमन्त्र्ये सौ, देवो देवा। ३--१३४ क्वचिद् द्वितीयादेः पष्ठी।३--१३५ द्वितीया-तृतीययोः सप्तमी। ३--१३६ पञ्चम्यास्तृतीया च, चात् सप्तमी। ३-१३७सप्तम्या द्वितीया, क्वचित्तृतीयाऽपि। २-१०४ र्हश्रीह्रीकृत्स्नक्रियादिष्टयास्वित् संयुक्तान्त्यात्पूर्वः, अरि-हस्स।२-१११ उच्चार्हति चाददितौ, अरहन्तो अरिहन्तो अरु-हन्तो।३--५८ अतः सर्वादेर्डे जसः, सव्वे। ३--६१ आमो डेसिम् सर्वादेरतः, सव्वेसिं। ३-५९ ङेः स्सिंम्मित्थाः अतः सर्वादेः। ३-६० नवाऽनिदमेतदो हिं ङेः सर्वादेरतः, सव्वस्सि सव्वहिं, काहिं इत्यपि। २--१३५ पूर्वस्य पुरिमः, पुरिमे। १- ४५ दक्षिणे हे दीर्घः, दाहिणम्मि दक्खिणेसु। २--११४ एकस्वरे श्वःस्वे पूर्व उत्, सुवो सुवे। १--४८ मध्यमकतमे द्वितीय-स्यात इः, कइमो। ३-१२४ शेषेऽदन्तवत् आकारान्तादौ, हाहा।३-१२९ एत् न, हाहा हाहाण।३-१२६ ङसेर्लुक् न, हाहाओ।३--१२७ भ्यसश्च हिर्न चात् ङसेः, हाहाहिन्तो हाहस्स।३-१२८ ङेर्डे न, हाहम्मि। ३-१९ अक्लीबे सौ इदुतो दीर्घः, कवी। ३--२२जश्शसोर्णो वा, कविणो।३--१२५न दीर्घो णो परे इदुतः। ३--२० पुंसि जसो डउ डओ वा, कवउ कवओ।३-२४ टो णा, कविणा। ३-१६ इदुतो दीर्घः भिस्भ्यस्सुपि, कवीहिं। ३--२३ ङसिङसोः पुंक्लीबे वा णो, कविणो कवी-हिन्तो कविस्स कवीण कविम्मि कवीसु कवि कवी। ३-२१ वोतो डवो जसः पुंसि, वाअओ वाउणो वाअओ वाउं वाऊ वाउणा,।३--१२० दुवे दोण्णि वेण्णि च जश्शसा दा वे चँ द्रः,

।३-११९ द्वेर्दो बे तृतीयादौ, दोहिं बेहिं ।३-१२३ संख्याया आमो ण्हण्हं, दोण्हं बेसु । ३--१२१ त्रेस्तिण्णि जश्शसा ।३-११८त्रेस्ती तृतीयादौ, तीहिं तीण्हं, गामणी।३-४३ क्विपः ईदूतो ह्रस्वः, गामणिणो। ३-४२ ईदूतो ह्रस्व आमन्त्र्ये, गामणि ।३-४७ नाम्न्यरः ऋतः, पिअरो। ३-४८ आ सौ नवा ऋतः, पिआ पिअराणं, जश्शस्ङस्सु उदपि, पिउणो। ३--३९ ऋतोऽद्धाऽऽमन्त्र्ये सौ। ३-४०नाम्न्यरं वा, पिअ पिअरं, कत्ता। ३-४५ आरः स्यादौ ऋतः, कत्तारो। ३-४४ ऋतामुदस्यमौसु वा, कत्तुणो, कत्तारं, हे कत्त, गउओ गउआ गाअस्स ॥ इति स्वरान्तपुंलिङ्गाः ॥

माला ३-२७ स्त्रियामुदोतौ वा सप्राग्दीर्घौ जश्शसोः, मालाउ मालाओ माला। ३-३६ ह्रस्वोऽमि स्त्रियां,मालं ।३-२९ टाङस्ङेरदादिदेद्वा तु ङसेः स्त्रियां सप्राग्दीर्घः,मालाअ । ३-३० नाऽऽत एत् टादीनां, मालाइ मालाहिं मालाए मालाअ मालत्तो इत्यादि। मालासु। ३-४१ वाऽऽप ए आमन्त्र्ये सौ, माले, अम्मो इत्यपि ।३-३१ प्रत्यये ङीर्नवाऽणादौ, साहणी साहणा ।३-३२ अजातेः पुंसः स्त्रियां वा ङीः। ३-२८ ईतः सेश्चा वा, चाज्जश्शसोः, सव्वी सव्वीआ सव्वा, बाहुलकात् सव्वेसिं, सव्वाए अन्नाण अन्नेसिं। १--३६ बाहोरात्स्त्रियां। १-१६४ नाव्यावः, नावा। २--१२६ दुहितृभगिन्योर्धूआबहिण्यौ ।३-१८ लुप्ते शासि इदुतो दीर्घः, बुद्धी बुद्धीओ बुद्धीणं बुद्धीए ।२--१२० स्त्रिया इत्थी वा, थीआ, वहू, वहूउ, वहुं । ३--३५ स्वस्रादेर्डा स्त्रियाम्, स्वसा नणंदा दुहिआ गउआ। ३--४६ आ अरा मातुः ऋतः स्यादौ। १-१३५ मातुरिद्वा गौणस्य,

क्वचिदगौणस्य,माआ माअरा माई ॥ इति स्वरान्तस्त्रीलिङ्गाः
३-२५ क्लीबे स्वरान्म् सेः, घयं । ३-२६ जश्शस
इँइंणयः सप्राग्दीर्घाः, घयाणि घयेण दहिं महुं महुणा ॥
॥ इति स्वरान्तनपुंसकलिंगाः ॥

। ३-३ वैतत्तदः अतः सेर्डोः । ३-८६ तदश्च तः
सोऽक्लीबे सौ चादेतदः, स सो ते । ३-७० तदो णः
स्यादौ क्वचित्, णं । ३--६९ इदमेतत्किंयत्तद्भ्यष्टो
डिणा वा, तिणा तेण । ३-६६ ङसेर्म्हा किंयत्तद्भ्यो वा,
तम्हा। ३-६७ तदो डोः ङसेर्वा, तो ताओ । ३-६३ किंयत्त-
द्भ्यो ङसो वा डासः, तास तस्स । ३-८१ वेदंतदेतदो ङसा-
म्भ्यां सेसिमौ, सिं। ३-६२ किंतद्भ्यां डासः वाऽऽमः, तास
तेसिं तम्मि तेसु। ३-८५ वैसेणमिणमो सिनैतदः, इणं इणमो
एसो एस एइणा एएण। ३--८२वैतदो ङसेस्त्तोत्ताहे । ३--८३
त्थे च तस्य लुक् एतदः, चात् त्तोताहेप्रत्यये, एत्तो एत्ताहे
एआओ सि । १--३२ स्नामदामशिरोनभः पुंसि, जम्मो
।२-५१ भस्मात्मनोः पो वा संयुक्तस्य, अप्पा। ३-५६पुंस्यन
आणो राजवच्च, आयाणो । ३--५७ आत्मनष्टो णिआ
णइआ, अप्पणइआ। ३-४९ राज्ञः सौ वाऽऽः, राया रायाणो
।३-५० जश्शस्ङसिङसां णो वा राज्ञः, रायाणो । ३-५२
इर्जस्य णोणाङौ, राइणो राया। ३-५३ इणममामा जस्य,
राइणं राए, राआणो राइणो ३-५५। आजस्य टाङसिङस्सु
सणाणोष्वण्वा, रण्णा। ३-५१ टो णा, राइणा ।३-५४ ईद्भि-
स्भ्यसाम्सुपि वाजः, राईहिं राआणेहिं रण्णो राइणो राईणं
राआआणं राइम्मि राईसु राआणेसु। ३-७२ इदम इमः स्यादौ,
इमो । ३-७३ पुंस्त्रियोर्नवाऽयमिमिआ सौ, अयं । ३-७७
णोऽम्शस्टाभिसीदमः वा, णं णे णेण। ३-७८अमेणं वेदमः,

इणं इमं इमिणा इमेण। ३-७४ स्सिंस्सयोरद्वा, अस्स अस्सि इमस्सि। ३-७५ ङेर्मेन हो वा, इह। ३-७६ न त्थः, इमम्मि। ३-७१ किमः कस्त्रतसोश्च, चात् स्यादौ, को के केण किणा कम्हा काओ। ३-६८ किमो डिणोडिसौ ङसेर्वा, किणो कीस कास कस्स केसि कत्थ कहिं। ३-८७ वादसो दस्य होऽनोदा, अह पुरिसो नई कुलं वा। ३-८८ मुः स्यादौ दः, अमू अमुणो अमुणा अमूओ। ३-८९म्मावयेऔ वा, अयंमि इयम्मि अमुम्मि ॥ इति व्यञ्जनान्तपुंलिगाः ॥

१-१५ स्त्रियामादविद्युतः, संपआ। ३-१८२ ई च स्त्रियां शत्रानशः, चात् न्तमाणौ, हसई हसन्ती हसमाणी। १-२१ ककुभो हः, ककुहा। ३-३३ किंयत्तदोऽस्यमामि वा ङीः, जीओ ताओ कीए काओ। ३-६४ ईद्भ्यः स्सासे किंयत्तद्भ्यो ङसः, कीस्सा कीसे कास काहिं कीए कीहिं इमीओ इमाओ अमुई। १-१६ रो रा, पुरा दिसा। १-२० आयुरप्सरसोर्वा सोऽन्त्यस्य, अच्छरा अच्छरसा॥इति व्यंजनान्तस्त्रीलिंगाः

३-७९ क्लीबे स्यमेदमिणमो च, चादिणं इदमः, इदं इणमो इणं इमे। ३-८०किमःकिं स्यमा क्लीबे, किं कानि॥ इति व्यंजनान्तनपुंसकलिंगाः ॥

अथ युष्मदस्मदी। ३-९० युष्मदस्तंतुंतुवंतुहतुमं सिना। ३-९१ भेतुब्भेउज्झेतुम्हतुय्हेउय्हे जसा। ३-१०४ ब्भोम्हज्झे वा, तुम्हे तुज्झे। ३-९२ तंतुंतुमंतुवंतुहतुमे तुए अमा। ३-९३ वोतुब्भेउज्झेतुय्हेउय्हेभे शसा। ३-९४ भेदिदेतेतइतए-

तुमंतुमइतुमएतुएतुमेतुमाइ टा । ३-९५ भेतुब्भेहिं-उज्झेहिंउम्हेहिंतुय्हेहिंउय्हेहिं भिसा । ३-९६ तइतुव-तुमतुहतुब्भा ङसौ, तइत्तो इत्यादि । ३-९७ तुय्हतुब्भ-तुहिन्तो ङसिना । ३-९८ तुब्भतुय्हउय्हउम्हा भ्यसि, तुम्हे-सुन्तो । ३-९९ तुइतुंतेतुम्हंतुहतुंहतुवतुमेतुमोतुमाइ-दिदेइएतुब्भोब्भोय्हा ङसा । ३-१०० तुवोभेतुय्ह-तुब्भउब्भतुब्भाणतुवाणतुमाणतुहाणतुम्हाण आमा । ३-१०१ तुमेतुमएतुमाइतइतए ङिना । ३-१०२ तुतुव-तुमतुहतुब्भा ङौ, तुम्मि । ३-१०३ सुपि एते, तुसुं तुम्हेसु । ३-१०५ अस्मदो म्मिअम्मिअम्हिहंअहंअहयं सिना । ३-१०६ अम्हअम्हेअम्होमोवयंभे जसा । ३-१०७ णेणंमिअम्मिअम्हंअम्हमंममंमिमंअहं अमा । ३-१०८ अम्हेअम्होअम्हेण शसा । ३-१०९ मि-मेममंममएममाइमइमएमयाइणे टा । ३-११० अम्हेहि-अम्हाहिअम्हअम्हेणे भिसा । ३-१११ मइममममह मज्झा ङसौ, मइओ । ३-११२ ममाम्हौ भ्यसि । ३-११३ मेमइममममहमहंमज्झमज्झंअम्हअम्हं ङसा । ३-११४ णेणोमज्झअम्हअम्हंअम्हेअम्होअम्हाणममाणमहाण-मज्झाण आमा । ३-११५ मिमइममाइमएमे ङिना । ३-११६ अम्हममहमज्झा ङौ, अम्हमि । ३-११७ सुपि, मज्झेसु अम्हेसु अम्हासु चेति ॥ इति युष्मदस्मदी ॥

## अथाऽव्ययानि.

२-१७५ अव्ययं । २-१७६ तं वाक्योपन्यासे । २-१७७ आम अभ्युपगमे । २-१७८ णवि वैपरीत्ये । २-१७९ पुण-रुत्तं कृतकरणे । २-१८० हन्दि विषादविकल्पपश्चात्ताप-निश्चयसत्ये । २-१८१ हन्द च गृहाणार्थे । २-१८२ मिव-

पियविवव्ववविअ इवार्थे वा । २-१८३ जेण तेण लक्षणे । २-१८४ णइ चेअ चिअ च्च अवधारणे । २-१८५ बले निर्धारणनिश्चययोः । २-१८६ किरेरहिर किलार्थे वा । २-१८७ णवर केवले । २-१८८ आनन्तर्ये णवरि । २-१८९ अलाहि निवारणे । २-१९० अण णाइं नञर्थे । २-१९१ माइं मार्थे । २-१९२ हद्धी निर्वेदे । २-१९३ वेव्वे भयवारण-विषादे । २-१९४ वेव्व च आमन्त्रणे । २-१९५ मामि हला हले सख्या वाऽऽमन्त्रणे । २-१९६ दे संमुखीकरणे च । २-१९७ हुं दानपृच्छानिवारणे । २-१९८ हु खु निश्चयवितर्कसं-भावनविस्मये । २-१९९ ऊ गर्हाक्षेपविस्मयसूचने । २-२०० थू कुत्सायां । २-२०१ रे अरे संभाषणरतिकलहे । २-२०२ हरे क्षेपे च । २-२०३ ओ सूचनापश्चात्तापे । २-२०४ अव्वो सूचनादुःखसंभाषणापराधविस्मयानन्दादरभयखेदवि-षादपश्चात्तापे । २-२०५ अइ संभावने । २-०२६ वणे निश्चय-विकल्पानुकम्प्ये च । २-२०७ मणे विमर्शे । २-२०८ अम्मो आश्चर्ये । २-२०९ स्वयमोऽर्थे अप्पणो नवा । २-२१० प्रत्ये-कमः पाडिक्कं पाडिएक्कं वा । २-२११ उअ पश्य । २-२१२ इहरा इतरथा वा । २-२१३ एक्कसरिअं झगिति संप्रति । २-२१४ मोरउल्ला मुधा वा । २-२१५ दराद्धाल्पे । २-२१६ किणो प्रश्ने । २-२१७ इजेराः पादपूरणे । २-२१८ प्यादयः नियतार्थाः, पि वि । १-१६९ अयौ वैत्, ऐ बीहेमि । २-१४० धहिसो बाहिंबाहिरौ । २-१४१ अधसो हेट्ठं । १-६५ नात्पुन-र्यादाइर्वाऽतः, न उणा । १-१३६ उदूदोन्मृषि ऋतः । १-१५४ उच्चैर्नीचैस्यअ ऐतः, उच्चअं । १-१७२ ऊच्चोपे, चादोत्, ऊज्झाओ । २-१३४ एण्हि एत्ताहे इदानीमः वा । २-१६२ वैकाद्दः सिसिअंइया, एक्कसि । ३ ६५ डेर्डाहेडालाइआ

नेकटौ वा ॥ ६-४-१६५ कुलिजाद्वा लुप् च द्विगोः इनेकटि-
कण्लुपः ॥ ६-४-१६६ वंशादेर्भाराद्धरद्वहदावहत्सु ॥
६-४-१६७ द्रव्यवस्नात्केकं ॥ ६-४-१६८ सोऽस्य भृतिव-
स्नांशं, पंचकः ॥ ६-४-१६९ मानं, द्रोणिकः ॥ ६-४-१७०
जीवितस्य सन् (न लुप्), द्वे षष्टी जीवितमानमस्य द्विषाष्टिकः
षष्टिकः ॥ ६-४-१७१ संख्यायाः संघसूत्रपाठे, पंचकः ॥
६-४-१७२ नाम्नि, पंचकाः शकुनयः ॥ ६-४-१७३ विंशत्या-
द्यः ॥ ६-४-१७४ त्रैंशचात्वारिंशं ॥ ६-४-१७५ पंचदश-
द्वर्गे वा॥ ६-४-१७६ स्तोमे डट्, विंशः॥ ६-४-१७७ तमर्हति,
वैषिकः ॥ ६-४-१७८ दंडादेर्यः ॥ ६-४-१७९ यज्ञादियः ॥
६-४-१८० पात्रात्तौ ॥ ६-४-१८१ दक्षिणाकडंगरस्थालीबि-
लादीययौ ॥ ६-४-१८२ छेदादेर्नित्यं, छैदिकः, भेद-द्रोह-
नर्त-कर्प-प्रयोग-प्रेक्षण-संप्रश्नाः॥ ६-४-१८३ विरागाद्विरंगश्च ॥
६-४-१८४ शीर्षच्छेदाद्यो वा॥ ६-४-१८५ शालीनकौपीना-
र्त्विजीनं॥ ७-१-१ यः ॥ ७-१-२ वहति रथयुगप्रासंगात्,
द्विगोरिति लुब्वारणाय॥ ७-१-३ धुरो यैयण्॥ २-१-६५ न यि
तद्धिते र्वोर्नामिनो दीर्घः, धुर्यः ॥ ७-१-४ वामाद्यादेरीनः,
सर्वधुरीणः, धुरीण इत्यपि ॥ ७-१-५ अश्वैकादेः ॥ ७-१-६
हलसीरादिकण् ॥ ७-१-७ शकटादण्, नेत्यपि । ७-१-८
विध्यत्यनन्येन, पद्याः शर्कराः। ७-१-९ धनगणाल्लब्धरि॥
७-१-१० णोऽन्नात् ॥ ७-१-११ हृद्य-पद्य-तुल्य-मूल्य-वश्य-
पथ्य-वयस्य-धेनुष्या-गार्हपत्य-जन्य-धर्म्यं यथास्वार्थं ॥ ७-
१-१२ नौविषेण तार्यवध्ये ॥ ७-१-१३ न्यायार्थादनपेते ॥
७-१-१४ मतमदस्य करणे ॥ ७-१-१५ तत्र साधौ, शरण्यः॥
७-१-१६ पथ्यतिथिवसतिस्वपतेरेयण् ॥ ७-१-१७ भक्ता-
ण्णः ॥ ७-१-१८ पर्षदो ण्यणौ ॥ ७-१-१९ सर्वजनाण्ण्ये-
नञौ ॥ ७-१-२० प्रतिजनादेरीनञ्, विश्वजन-महाजन-इदंयुग-
परयुग-परकुलानि ॥ ७-१-२१ कथादेरिकण्, वितंडा-जनवाद-

वृत्ति-संग्रह-गुण-गण-वेणु-मांस-ग्राम-उपवासाः ॥ ७-२-२२ देव-
तान्ताात्तदर्थे,देवदेवत्यं॥ ७-२-२३ पादार्घ्यै॥ ७-२-२४ण्योऽ-
तिथेः॥७-१-२५सादेश्चाऽऽतदः अधिकारः॥७-१-२६हलस्य कर्षे
॥ ७-१-२७ सीतया संगते॥ ७-१-२८ ईयः आतदः॥ ७-१-२९
हविरन्नभेदापूपादेर्यो वा इदमादौ, तंडुल-ओदन-पृथुक-कटक-
शकट-यूप-स्थूप-दीपाः॥७-१-३० उवर्णयुगादेर्यः, हविस्-अष्टका-
नर्हिस्-मेधा-कूप-अक्षर-असुर-खर-विष-दर-गावः॥ ७-१-३१नाभे-
र्नभ् चादेहांशात्॥ ७-१-३२ न् चोधसः ॥ ७-१-३३ शुनो
वश्चोदूत्, शून्यं शुन्यं ॥ ७-१-३४ कंबलान्नाम्नि ॥ ७-१-३५
तस्मै हितं॥ ७-१-३६ न राजाचार्यब्राह्मणवृष्णः॥ ७-१-३७
प्राण्यंगरथखलतिलयवयवृपब्रह्ममापाद्यः॥ ७-१-३८ अव्य-
जात् थ्यप्॥ ७-१-३९ चरकमाणवादीनञ्॥ ७-१-४० भोगो-
त्तरपदात्मभ्यामीनः, आचार्यभोगीनः ॥ २-३-९६ क्षुभ्ना-
दीनां न णः, तृप्नु-आचार्यानी-आचार्यभोगीन-सर्वनामन्-

नर्त्तन-नट--नद-नगर--निवेश-अग्नि--अनूप-नंदन-गहन-ख्याताः॥
७-४-४८ इनेऽध्वात्मनोः न नादिलुक् , आत्मनीनः ॥
७-१-४१ पंचसर्वविश्वाज्जनात्कर्मधारये, सर्वजनीनः ॥
७-१-४२ महत्सर्वादिकण्, सार्वजनिकः ॥ ७-१-४३ सर्वा-
ण्णो वा सार्वः ॥ ७-१-४४ परिणामिनि तदर्थे, आमिक्ष्यं
आमिक्षीयं दधि॥ ७-१-४५ चर्मण्यञ्, वार्द्धं ॥ ७-१-४६ ऋष-
भोपानहाञ्ञ्यः॥ ७-१-४७ छदिर्बलेरेयण् । ७-१-४८ परि-
खाऽस्य स्यात् संभाव्या, पारिखेय्यः इष्टकाः॥ ७-१-४९ अत्र च,
पारिखेयी भूमिः॥ ७-१-५० तत्,प्राकारीया इष्टकाः॥ ७-१-५५
भावे त्वतल्, शब्दप्रवृत्तिनिमित्ते, जातिगुणाज्जातिगुणे, समा-
सकृत्तद्धितासु संबंधे, पृथग्भूतस्य भावः पृथक्त्वं, संज्ञासंज्ञि-
संबंधो वा ॥ २-४-१०० त्वे ङ्यापो ह्रस्वो बहुलं, अजत्वं ॥
७-१-५६ प्राक्त्वादगडुलादेः त्वतलौ, गडुलादपि ॥ ७-१-५७
नञ्तत्पुरुषादबुधादेः , चतुर-संगत-लवण-वड-कत-रस-लस-

यथा-तथा-क्षेत्रज्ञ-संवादि-संभाषिन्-शीर्षघातिन्-पुरस्थ-कापुरुषाः॥ अष्टैवात्रेति विकल्पेनेति चापरे ॥ ७—१—५८ पृथ्वा--देरिमन् वा ॥ ७-४-३९ पृथुमृदुभृशकृशदृढपरिवृढस्य ऋतो रः इमनि णीष्ठेयस्सु च ॥ ७-४-४३ अन्त्यस्वरादेः इमनि णीष्ठेयस्सु च लुक्, प्रथिमा पृथुता पार्थवं ॥ ७-४-४४ नैक-स्वरस्य अन्त्यादिलुक् इमनि णीष्ठेयसौ च, स्रगिमा ॥ ७-४-४१ भूर्लुक् चेवर्णस्य ( भुव ऊत् ) भूमा ॥ ७-४-३८ प्रियस्थिर-स्फिरोरुगुरुबहुलतृप्रदीर्घवृद्धवृन्दारकस्येमनि च प्रास्थास्फा-वरगरबंहत्रप्रदाघवर्षवृन्दं, णीष्ठेयसौ च, नेमनि स्फिरः णौ प्राया नेति ॥ ७--४- ४२ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्या-न्तस्थादेः ( लुक् ) गुणश्च नामिनः इमणीष्ठेयसौ, पटु-महि-तनु-लघु-बहु--साधु-उरु-खंड-चंड-अकिंचन-बाल--होड-पाक-वत्स-मन्द-स्वादु-ऋजु-वृप-कटु-महत्-अणु-चारु-वक्र-कालाः ॥ ७-१-५९ वर्णदृढादिभ्यष्ट्यण् च वा, शुक्लिमा शौक्ल्यं, त्वतलौ । चक्र-शुक्र--आम्र-ताम्र--अम्ल-लवण-शीत-उष्ण-तृष्णा-जड-बधिर-मूक-मूर्ख-पंडित-मधुर-विशारद-संमतयः॥७-१-६०पतिराजान्त-गुणांगराजादिभ्यः कर्मणि च, भावेऽपि, आधिपत्यं, कवि-ब्राह्मण-चौर-धूर्त--आराधय-अनृशंस-कुशल-चपल--निपुण-पिशुन-स्वस्थ-विफल-पुरोहित-सूतक-बाल-मंदाः॥७-४-२२ नञः क्षेत्रज्ञे-श्वरकुशलचपलनिपुणशुचेः आदेर्वृद्धिः नञो वा, आशौच्यं॥ ७-१-६१अर्हतस्तो न्त् च, आर्हन्त्यं ॥ ७-१-६२ सहायाद्वा ॥ ७-१-६३ सखिवणिग्दूताद्यः॥ ७-१-६४ स्तेनान्नलुक् च ॥ ७-१-६५ कपिज्ञातेरेयण् ॥ ७-१-६६ प्राणिजातिवयो-ऽर्थादञ्, आश्वं ॥ ७-१-६७ युवादेरण्, अज-स्थविर-श्रमण-सुहृत्-अनृशंस--निपुण-क्षेत्रज्ञ--होतृ-भर्तृ-सुष्ठु--कर्तृ--मिथुन-सहस्-कितवाः॥ ७-१-६८ हायनान्तात्॥ ७-१-६९ रवृवर्णाल्लघ्वादेः भावे कर्मण्यण्त्वतलः, व्यवधाने, शौचं ॥ ७-१-७० पुरुष-हृदयादसमासे ॥ ७-१-७१ श्रोत्रियाद्यलुक् च, श्रौत्रं ।

७-१-७२योपान्त्याद् गुरूपोत्तमा(त्त्यादीनामन्त्यं) दसुप्रख्यादकञ्, रामणीयकं ॥ ७-१-७३ चौरादेः, त्वतलावपि, धूर्त-युवन्-मनोज्ञ-बहुल-मेधाविन्-कल्याण-कुलपुत्र-वृद्ध-अवश्यानि। ७-४-६० यूनोऽके अन्त्यादिलुक्, यौवकः ॥ ७-१-७४ द्वन्द्वाल्लित्, वैत्रिका ॥ ७-१-७५ गोत्रचरणाच्छ्लाघाऽत्याकार-(न्यत्कार) प्राप्त्यवगमे, गार्गिकया श्लाघते न्यत्करोति गार्गिकामधिगतवान् ज्ञातवान्वा ॥ ७-१-७६ होत्राभ्य ईयः, नेष्ट्रीयं ॥ ७-१-७७ ब्रह्मणस्त्वः भावे कर्मणि च, तलपि जातेः॥ ७-१-७८ शाकटशाकिनौ क्षेत्रे, शाकशाकटं॥७-१-७९ धान्येभ्यः ईनञ् ॥ ७-१-८० व्रीहिशालेरेयण् ॥ ८-१-८१ यवयवकषष्टिकाद्यः । ७-१-८२ वाऽणुमापात्, पक्षे ईनञ् ॥ ७-१-८३ वोमाभंगातिलात् ॥ ७-१-८४ अलाव्वाश्च कटो रजसि ॥ ७-१-८५ अह्ना गम्येऽश्वादीनञ्, आश्वीनः मार्गः ॥ ७-१-८६ कुलाज्जल्पे ॥ ७-१-८७ पील्वादेः कुणः पाके, शमी-करीर-बदर-कुवल-खदिराः॥ ७-१-८८कर्णादेर्मूले जाहः ॥ ७-१-८९ पक्षात्तिः ॥ ७-१-९० हिमादेलुः सहे ॥ ७-१-९१ बलवातादूलः ॥ ७-१-९२ शीतोष्णतृपादालुरसहे ॥ ७-१-९३ यथामुखसंमुखादीनस्तद् दृश्यतेऽस्मिन्, यथामुखीन आदर्शः ( अथेति निषेधेऽप्यव्ययीभावः ) ॥ ७-१-९४ सर्वादेः पथ्यंगकर्मपत्रपात्रशरावं व्याप्नोत्ति॥ ७-१-९५ आप्रपदं,आप्रपदीनः॥ ७-१-९६ अनुपदं बद्धा, अनुपदीनः ॥ ७-१-९७ अयानयं नेयः ईनः॥७-१-९८सर्वान्नमात्ति॥७-१-९९ परोवरीणपरंपरीणपुत्रपौत्रीणं ॥ ७-१-१०० यथाकामानुकामात्यंतं (अम्) गामिनि ॥ ७-१-१०१ पारावारं व्यस्तव्यत्यस्तं च॥७-१-१०२अनुग्वलं,अलंगवीनः॥७-१-१०३अध्वानं यैनौ॥७-१-१०४अभ्यमित्रमीयश्च अलं गामिनि॥७-१-१०५ समांसमीनाद्यश्वीनाद्यप्रातीनाऽऽगवीनसाप्तपदीनं॥ ७-१-१०६ अपञ्क्षाऽऽशितंग्वलंकर्मालंपुरुपादीनः स्वार्थे ॥

७-१-१०७ अदिक्स्त्रियां वाऽञ्चः, वाऽधिकारे वाग्रहणात्पूर्वं नित्यं ॥ ७-१-१०८ तस्य तुल्ये कः संज्ञाप्रतिकृत्योः , आश्विका, तुल्य एवेति॥ ७-१-१०९न नृ१पूजार्थ२ध्वज३चित्रे४। ७-१-११० अपण्ये जीवने न कः, शिवः॥ ७-१-१११ देवपथादिभ्यः न कः ॥ ७-१-११२ वस्तेरेयञ् ॥ ७-१-११३ शिलाया एयच्च ॥ ७-१-११४ शाखादेर्यः, मुख-जघन-स्कंध-शरण-उरस्-शिरस्-अग्राः ॥ ७-१-११५ द्रोर्भव्ये ॥ ७-१-११६ कुशाग्रीयः॥ ७-१-११७ काकतालीयादयः, खलतिबिल्वीयं अंधकवर्त्तिकं अर्धजरतीयं अजाकृपाणीयं घुणाक्षरीयं॥ ७-१-११८ शर्करादेरण्, कपालिका-गोपुच्छ-पुंडरीक-नकुल-सिकताः॥ ७-४-१२ पदस्यानिति औः,श्वापदं शौवपदं ॥ ७-१-११९ अः सपत्न्याः ॥ ७-१-१२० एकशालाया इकः ॥ ७-१-१२१ गोण्यादेश्चेकण् , अंगुली-मंडल-हरि-मुंड-कपि-खल-तरस्-मुनि-कुलिशाः॥७-१-१२२कर्कलोहिताट्टीकण् च॥ ७-१-१२३ वेर्विस्तृते शालसंकटौ॥ ७-१-१२४ कटः वेः ॥ ७-१-१२५ संप्रोन्नेः संकीर्णप्रकाशाधिकसमीपे कटः॥ ७-१ १२६ अवात्कुटारश्चावनते । ७-१-१२७ नासानतितद्वतोष्टीटनाटभ्रटं अवात् ॥ ७-१-१२८ नेरिन१पिट२का३श्चिकु१चिर२चिक३श्चास्य॥ ७-१-१२९ बिडाबिरीसौ नीरंध्रे च नेः चात्पूर्वत्र ॥ ७-१-१३०क्लिन्नाल्लश्चक्षुषि चिल्पिल्चुल् चास्य,चिल्लं॥ ७-१-१३१ उपत्यकाधित्यके॥ ७-१-१३२ अवेः संघातविस्तारे कटपटं ॥७-१-१३३पशुभ्यः स्थाने गोष्ठः॥७-१-१३४द्वित्वे गोयुगः॥ ७-१-१३५ षट्त्वे षड्गवः॥ ७-१-१३६ तिलादिभ्यः स्नेहे, तैलः॥ ७-१-१३७ तत्र घटते कर्मणष्ठः॥ ७-१-१३८ तदस्य संजातं तारकादिभ्य इतः,पुष्प-मित्र-मूत्र-पुरीप-उच्चार-विचार-प्रचार-कुसुम-मुकुल-स्तबक-पल्लव- किशलय-निद्रा-तंद्रा-श्रद्धा-बुभुक्षा-पिपासा-द्रोह-सुख-दुःख-उत्कंठा-तरंग-व्याधि-कंटक-मंजरी-अंकुर-पुलक-रोमांच-हर्ष-उत्कर्ष-गर्व-कलंक-कज्जल-राग-क्षुध् तृष्-ज्व-

र-पंडा-मुद्रा-फल-तिलका:॥ ७-१-१३९गर्भादप्राणिनि, गर्भितो व्रीहिः॥ ७-१-१४० प्रमाणान्मात्रट् ॥ ७-१-१४१ हस्तिपुरुषाद्वाऽण्॥ ७-१-१४२ वोर्ध्वं दघ्नट्द्वयसट् ॥ ७-१-१४३ मानादसंशये लुप्, हस्तः॥ ७-१-१४४ द्विगोः संशये च, द्विशमः ( हस्तः )॥ ७-१-१४५ मात्रट्॥ ७-१-१४६ शन्शद्विंशतेः संशये, दशमात्राः॥ ७-१-१४७ डिन्, विंशिनो भवनेद्राः॥ ७-१ १४८ इदंकिमोऽतुरिय् किय् चास्य ॥ ७-१-१४९ यत्तदेतदो डावादिः ॥ ७-१-१५० यत्तत्किमः संख्याया डतिर्वा॥ ७-१-१५१ अवयवात्तयट्॥ ७-१-१५२ द्वित्रिभ्यामयट् वा॥ ७-१-१५३ द्व्यादेर्गुणान् मूल्यक्रेये मयट्, द्विमया यवा उदश्वितः॥ ७-१-१५४ अधिकं तत्संख्यमस्मिन् शतसहस्रे शतिशद्दशान्ताया डः, विंशं योजनशतं॥ ७-१-१५५ संख्यापूरणे डट्॥ ७-१-१५६ विंशत्यादेर्वा तमट्॥ ७-१-१५७ शतादिमासार्धमाससंवत्सरात्, शततमः॥७-१-१५८ षष्ट्यादेरसंख्यादेः, षष्टितमः, संख्यादेस्तु वा ॥ ७-१-१५९ नो मट् असंख्यादेः॥७-१-१६०पित् तिथट् बहुगणपूगसंघात्॥ ७-१-१६१ अतोरिथट्॥ ७-१-१६२ षट्कतिकतिपयात्थट्॥ ७-१-१६३ चतुरः ॥ ७-१-१६४ येयौ चलुक् च ॥ ७-१-१६५ द्वेस्तीयः॥ ७-१-१६६ त्रेस्तृ च॥ ७-१-१६७ पूर्वमनेन सादेश्चेन्, पूर्वी कृतपूर्वी वा कटं॥ ७-१-१६८ इष्टादेः,इष्टी पूर्ति, उपासित-अर्चित-गृहीत-अधीत-आम्नात-श्रुत-कृत-गणित-पठित--कथितानि॥ ७-१-१६९ श्राद्धमद्यभुक्तमिकेनौ, श्राद्धी॥ ७-१-१७० अनुपद्यन्वेष्टा ॥ ७-१-१७१ दांडाजिनिकायःशूलिकपार्श्वकं ॥ ७-१-१७२ क्षेत्रेऽन्यस्मिन्नाश्य इयः, क्षेत्रियः व्याधिः जारश्च ॥ ७-१-१७३ छंदोऽधीते श्रोत्रश्च वा ॥ ७-१-१७४ इंद्रियं ॥ ७-१-१७५ तेन वित्ते चंचुचणौ ॥ ७-१-१७६ पूरणाद् ग्रंथस्य ग्राहके को लुक् चास्य, द्वितीयेन रूपेण ग्राहको द्विकः ॥ ७-१-१७७ ग्रहणाद्वा॥ ७-१-१७८ सस्याद् गुणा-

त्परिजाते, परितो जातः सस्यकः ॥ ७-१-१७९ धनहरिण्ये
कामे ॥ ७-१-१८० स्वांगेषु सक्ते ॥ ७-१-१८१ उदरे त्वि-
कण् आद्यूने सक्ते ॥ ७-१-१८२ अंशं हारिणि ॥ ७-१-१८३
तंत्रादचिरोद्धृते, तंत्रकः पटः॥ ७-१-१८४ ब्राह्मणान्नाम्नि॥
७-१-१८५ उष्णात्, उष्णिका अचिरोद्धृते ॥ ७-१-१८६
शीताच्च कारिणि ॥ ७-१-१८७ अधेरारूढे स्वार्थे ॥ ७-१-
१८८ अनोः कमितरि ॥ ७-१-१८९ अभेरीश्च वा, अभिकः
अभीकः॥ ७-१-१९० सोऽस्य मुख्यः, देवदत्तकः॥ ७-१-१९१
शृंखलकः करभे । ७-१-१९२ उदुत्सोरुन्मनसि । ७-१-१-
९३ कालहेतुफलात् रोगे, सततकः पर्वतकः उष्णकः ॥
७-१-१९४ प्रायोऽन्नमस्मिन्नाम्नि , गुडापूपिका पौर्णमासी
॥ ७-१-१९५ कुल्माषादण्॥ ७-१ १९६ वटकादिन्॥ ७-१-
१९७ साक्षाद् द्रष्टा, साक्षी॥ ७-२-१ तदस्यास्त्यस्मिन्निति
मतुः, भूमनिंदाप्रशंसासु, नित्ययोगेऽतिशायने । संसर्गेऽस्ति-
विवक्षायां, प्रायो मत्वादयो मताः ॥ १ ॥ मतोर्न सममतुः ॥
१-१-२३ न स्तं मत्वर्थे नाम पदं॥ २-१९६ चर्मण्वत्यष्ठीवच्च-
क्रीवत्कक्षीवद्रुमण्वत् । २-१-९७ उदन्वदब्धौ च, चा-
म्नाम्नि ॥ २-१-९८ राजन्वान् सुराज्ञि॥ २-१-९९ नोर्म्यादि-
भ्यः, भूमि-तिमि-कृमि-यव-क्रुंचा-द्राक्षा-वासा-हरित्-गरुत् ककुद्-
ज्योतिष्-महिप--गो-कान्ति-चारु-इक्षु-बंधु-मधु-विन्दु--इन्दु-द्रु-वसु-
अंसु-श्रु-हनु-सानु-भानवः, नैभ्यो मतोर्मो वः ॥ ७-२-२ आ यात्
मतुः॥ ७-२-३ नावादेरिकः, कुमारी-सभा-करणानि ॥ ७-२-४
शिखादिभ्य इन् , माला-शाला-मेखला-शाखा-वीणा-संज्ञा-
कर्मन्-बल-उत्साह-उल्लास-आयाम-आरोह-शृंग-वृंद-कुल-फल-मान-
मनीषा-व्रत-केका-दंष्ट्रा-करुणा-जरा उद्यमाः॥ ७-२-५ व्रीह्यादि-
भ्यस्तौ ॥ ७-२-६ अतोऽनेकस्वरात् ॥ ७-२-७ अशिरसोऽ-
शीर्षश्च ॥ ७-२-८ अर्थार्थान्ताद्भावात् इकेनौ, न मतुः, अर्थी
प्रत्यर्थी॥ ७-२-९ व्रीह्यर्थतुंदादेरिलश्च, उदर-यव-ग्रह-पंकाः ॥

७-२-१० स्वांगाद्विवृद्धात्ते ॥ ७-२-११ वृंदादारकः ॥ ७-२-१२ शृंगात्॥ ७-२-१३ फलबर्हाच्चेनः॥ ७-२ १४ मलादीमसश्च ॥ ७-२-१५ मरुत्पर्वणस्तः ॥ ७-२-१६ वलिवटितुंडेर्भः ॥ ७-२-१७ ऊर्णाहंशुभमो युस् ॥ ७-२-१८ कंशंभ्यां युस्१तिरयस्२तु४त५व६भं६॥ ७ २-१९ बलवातदन्तललाटादूलः॥ ७-२-२० प्राण्यंगादातो लः, जंघालः॥ ७-२-२१ सिध्मादिक्षुद्रजंतुरुग्भ्यः, यूकालः मूर्च्छालः, वर्ष्मन्-गडु-तुंडि-पांशु-पार्ष्णी-धमनी-मणि-मांस-पत्रल-वात-स्नेह-शीत-श्याम-पिंग-पक्ष्मन्-पृथु-मृदु-मंजु-कंडवः, वत्सांसावपि॥७-२-२२प्रज्ञापर्णोदकफेनाल्लेलौ ॥ ७-२-२३ कालाजटाघाटात्क्षेप, न मतुः, काडेति ॥ ७-२-२४ वाच आलाटौ ॥ ७-२-२५ ग्मिन्, वाग्मी ॥ ७-२-२६ मध्वादिभ्यो रः, ख-मुख-कुंज-नग-ऊप-मुष्क-शुषि-कंडू-पांडु-पांशवः॥ ७-२-२७ कृष्यादिभ्यो वलच् ॥ ३-२-८२ वलच्यपित्रादेः दीर्घः, कृषीवलः, आसुती-परिषद्-पर्षद्-रजस् ( सामान्ये ) दन्त-शिखा-पितृ-मातृ-भ्रातृ-उत्साह-पुत्र-उत्संगाः॥ ७-२-२८ लोमपिच्छादेः शेलं, लोमन्-हरि-कपि-मुनि-गिरि-उरु-कर्क-उरस्-ध्रुवका-पक्ष-चूर्णानि॥७-२-२९नोऽङ्गादेः अंगना-पामन्-वामन-कद्रु-वलयः ॥ ७-२-३० शाकीपलालीदद्रूर्वा ह्रस्वश्च ॥ ७-२-३१ विष्वचो विषुश्च ॥ ७-२-३२ लक्ष्म्या अनः॥७-२-३३ प्रज्ञाश्रद्धार्चावृत्तेर्णः॥ ७-२-३४ ज्योत्स्नादिभ्योऽण्, तमिस्र-विसर्ग-विसर्प-कुतुप-कुंडल-तपांसि( नात्र रूढौ मतुः )॥ ७-२-३५ सिकताशर्करात् ॥ ७-२-३६ इलश्च देशे, सैकतः॥ ७-२-३७द्युद्रोर्मः॥ ७-२-३८ काण्डाण्डभांडादीरः॥ ७-२-३९ कच्छ्वा डुरः॥ ७-२-४० दंतादुन्नतात्॥ ७-२-४१ मेधारथान्नवेरः॥ ७-२-४२ कृपाहृदयादालुः ॥ ७-२-४३ केशाद्वः॥ ७-२-४४ मण्यादिभ्यः, हिरण्य-चित्र-कुरर राजी-गांडी-अजकाः॥ ७-२-४५ हीनात्स्वांगादेः॥ ७-२-४६ अभ्रादिभ्यः, अर्शस्-उरस्-तुन्द-चतुर-पलित-काम-वल-घटाः॥

७-२-४७ अस्तपोमायामेधास्रजो विन् ॥ ७-२-४८ आमयाद्दीर्घश्च ॥ ७-२-४९ स्वान् मिन्नीशे ॥ ७-२-५० गोः, पूज्ये इति ॥ ७-२-५१ ऊर्जो विन्वलावस् चांतः, ऊर्जस्वी ऊर्ज्वान् ॥ ७-२-५२ तमिस्रार्णवज्योत्स्नाः ॥ ७-२-५३ गुणादिभ्यो यः ॥ ७-२-५४ रूपात् प्रशस्ताहतात् ॥ ७-२-५५ पूर्णमासोऽण् ॥ ७-२-५६ गोपूर्वादत इकण्, गौशतिकः, अनतोऽपीति ॥ ७-२-५७ निष्कादेः शतसहस्रात् ॥ ७-२-५८ एकादेः कर्मधारयात् शतादेः ॥ ७-२-५९ सर्वादेरिन् अतः, सर्वधनी ॥ ७-२-६० प्राणिस्थादस्वांगाद् द्वन्द्वरुग्निंद्यात्, कटकवलयिनी कुष्ठी काकतालुकी ॥ ७-२-६१ वातातिसारपिशाचात्कश्चान्तः ॥ ७-२-६२ पूरणाद्वयसि, पंचमीवालः ॥ ७-२-६३ सुखादेः, दुःख-तृप्र-कृच्छ्र-अस्र-अलीक-कृपण-सोढ-प्रणय-कक्ष-शीलानि ॥ ७-२-६४ मालायाः क्षेपे ॥ ७-२-६५ धर्मशीलवर्णान्तात्, मुनिधर्मी ॥ ७-२-६६ बाहूर्वादेर्बलात्, बाहुबली ॥ ७-२-६७ मन्माब्जादेर्नाम्नि, दामिनी वामिनी सरोजिनी ॥ ७-२-६८ हस्तदन्तकराज्जातौ ॥ ७-२-६९ वर्णाद् ब्रह्मचारिणि ॥ ७-२-७० पुष्करादेर्देशे, पत्र-उत्पल-नल-बिस-मृणाल-कर्दम-शालूर-करीष-शिरीष-यव-माष-तट-तरंगाः ॥ ७-२-७१ सूक्तसाम्नोरीयः, मैत्रावरुणीयं ॥ ७-२ ७२ लुब् वाऽध्यायानुवाके, द्रुमपुष्पः ॥ ७-२-७३ विमुक्तादेरण्, देवासुर-उपसद्-मरुत्-दशार्ह-वयस्-इडा-इला-उर्वशी-दशार्ण-वृत्रघ्नः ॥ ७-२-७४ घोषदादेरकः, अंजन-उशान-कृशानु-वाचस्पति-स्वाहा-प्राणाः ॥ ७-२-७५ प्रकारे जातीयर् ॥ ७-२-७६ कोऽण्वादेः, स्थूल-माष-इषु-इक्षु-वाद्य-तिल-काल-मूल मणि-चन्द्र-पुंड्राः, पूर्णो मतोरवधिः ॥ ७-२-७७ जीर्णगोमूत्रावदातसुरायवकृष्णात् शाल्याच्छादनसुराऽहिव्रीहितिले प्रकारे ॥ ७-२-७८ भूतपूर्वे प्चरट् ॥ ७-२-७९ गोष्ठादीनञ्, भूतपूर्वो गोष्ठः गौष्ठीनः ॥ ७-२-८० षष्ठ्या रूप्यप्चरट्, देव-

दत्तस्य भूतपूर्वः देवदत्तरूप्यः ॥ ७-२-१५२ संख्यादेः पादादिभ्यो दानदंडे चाकल् लुक् च, द्विपदिकां दंडितः, चाद्वीप्सायां ॥ ७-२-१५३ तीयाट्टीकण् न विद्या चेत् स्वार्थे ॥ ७-२-१५४ निष्फले तिलात्पिञ्जपेञ्जौ ॥ ७-२-१५५ प्रायोऽतोर्द्वयसट्मात्रट् ॥ ७-२-१५६ वर्णाव्ययात्स्वरूपे कारः ॥ हुकारं करोतीत्यादियोगाय॥७-२-१५७रादेफः॥७-२-१५८नामरूपभागाद्धेयः ॥ ७-२-१५९ मर्त्तादिभ्यो यः ॥ ७-२-१६० नवादीनतनत्नं च नूश्चास्य ॥ ७-२-१६१ प्रात्पुराणे नश्च, प्रणं प्रत्नं ॥ ७-२-१६२ देवात्तल् ॥ ७-२-१६३ होत्राया ईयः ॥ ७-२-१६४ भेषजादिभ्यष्ट्यण्, अनंत-आवसथ-इतिह-चतुर्वेद-चतुर्विद्य-त्रिविद्य-त्रिलोकाः ॥ ७-२-१६५ प्रज्ञादिभ्योऽण्,वणिज्-प्रत्यक्ष-विद्वस्-मनस्-सर्व-दशार्ह-वयस्-रक्षस्-चोर-देवता-बन्धवः ॥ ७-२-१६६ श्रोत्रौषधिकृष्णाच्छरीरभेषजमृगे ॥ ७-२-१६७ कर्मणः संदिष्टे नित्यमण् ॥ ७-२-१६८ वाच इकण् ॥ ७-२-१६९ विनयादिभ्यः, समय-समाय-कथंचित्-अकस्मात्-उपचार-व्यहार-संप्रदाय-संगति- संग्राम-समूह-विशेषाः॥ ७-२-१७० उपायाद् ह्रस्वश्च॥७-२-१७१ मृदस्तिकः॥ ७-२-१७२ सस्नौ प्रशस्ते, मृत्सा, स्वरूपेऽपि ॥ २-४-१०३ गोण्या मेये ह्रस्वो, गोणिः॥ ७-३-१ प्रकृते मयट् ( प्राचुर्यं प्राधान्यं वा ) यवागूमयं, स्वार्थिका अप्यन्यलिंगवचनाः ॥ ७-३-२ अस्मिन्, अपूपमयं पर्व ॥ ७-३-३ तयोः समूहवच्च बहुषु, अश्वीया अश्वमयी ॥ ७-३-४ निंद्ये पाशप्, शब्दप्रवृत्तिनिमित्तकुत्सायाम् ॥ ७-३-५ प्रकृष्टे तमप्, गुणक्रिययोः, तद्विवक्षया जातिद्रव्ययोरपि, शुक्लतमः गोतमः श्रेष्ठतमः सूक्ष्मवस्त्रतमः सुसूक्ष्मतमवस्त्रः ॥ ७-४-२१ वाऽन्तमांतितमांतितोंऽतियांतिषद्,अन्तमःअंतितमः अन्तितःअंतियःअंतिषद्॥२-३-३४ ह्रस्वान्नाम्नस्ति सः पः, वपुष्टमं ॥ ७-३-६ द्वयोर्विभज्ये तरप् प्रकृष्टे,दंतोष्ठस्य दंताः स्निग्धतराः॥ ७-३-७ क्वचित्स्वा-

र्थेऽपि, उच्चैस्तराम् ॥ ७-३-८ किंत्याद्येऽव्ययादसत्त्वे तयोर-
न्तस्याम् ॥ ७-३-९ गुणांगाद्वेष्ठेयसू तमप्तरपोः, अयमेषाम-
तिशयेन पटुः पटिष्ठः पटुतमः, अनयोः पटीयान् पटुतरः, गुणां-
गात् गोतमः शुक्लतरं ॥ ७-४-३२ विन्मतोर्णीष्ठेयसौ लुप्,
त्वचिष्ठः त्वचीयान् ॥ ७-४-३३ अल्पयूनोः कन्वा, कनिष्ठः
॥७-४-३४ प्रशस्यस्य श्रः, नैकस्वरेऽवर्णेवर्णलोपः,श्रेयान्॥ ७-४-
३५ वृद्धस्य च ज्यः, ज्यायान् ॥ ७-४-३६ ज्यायान् ( एरा
इयसोः ) ॥ ७-४-३७ बाढान्तिकयोः साधनेदौ, नेदीयान् ॥
७-४-४० बहोर्णीष्ठे भूयः, भूयिष्ठः भूयान् ॥ ७-३-१० त्यादे-
श्च प्रशस्ते रूपप्, चात् गुणांगात्, पचतिरूपं वैयाकरणरूपः ॥
७-३-११ अतमबादेरीषदसमाप्ते कल्पप्देश्यप्देशीयर्,
पचतिकल्पं , गुडकल्पा द्राक्षा ॥ ७-३-१२ नाम्नः प्राग्
बहुर्वा, बहुगुडो द्राक्षा, प्रकृतिलिंगः । ७-३-१३ न तमबादिः
कपोऽच्छिन्नादिभ्यः, एषामनयोर्वा प्रकृष्टः पटुः पटुकः, कुत्सा-

दौ तु स्यात् पटुतमकः, छिन्नकतमः॥ ७-३-१४ अनन्त्यंते कपो
न तमबादिः, प्रकृष्टं छिन्नकं ॥ ७-३-१५ यावादिभ्यः कः
स्वार्थे,मणि-अवि-अस्थि-पात्र-ज्ञात-नित्य-पुण्य-वयस्-चंद्र-जानु-भि-
क्षवः॥ ७-३-१६ कुमारीक्रीडनेयसोः कंदुकः श्रेयस्कः॥ ७-३-
१७ लोहितान्मणौ, लोहितिका, नामापि ॥ ७-३-१८ रक्ता-
नित्यवर्णयोः लोहिनिका पटी, लोहितकमक्षि ॥ ७-३-१९
कालात्, कालकः पटः कालकं मुखं, कालः ॥ ७-३-२०
शीतोष्णादृतौ॥७-३-२१ लूनावियातात् पशौ॥७-३-२२स्ना-
ताद्वेदसमाप्तौ ॥ ७-३-२३ तनुपुत्राणुबृहतीशून्यात् सूत्र-
कृत्रिमनिपुणाच्छादनरिक्ते ॥ ७-३-२४ भागेऽष्टमाञ्ञः
॥ ७-३-२५ षष्ठात्॥ ७-३-२६ माने कश्च भागे, षाष्ठः ॥ ७-३-
२७ एकादाकिन् चासहाये ॥ ७-३-२८ प्रागित्यात् कप्
कुत्सिताल्पाज्ञाते, अश्वकः ॥ ७-३-२९ त्यादिसर्वादेः स्वरेष्व-
न्त्यात्पूर्वोऽक् , पचतकि सर्वके तकया ॥ ७-३-३० युष्मद्-

स्मदोऽसोभादिस्यादेः, मयका, भवतकेत्यपि, विभक्तेरन्तु ॥ ७-३-३१ अव्ययस्य को द् च, उच्चकैः पृथकद् ॥ ७-३-३२ तूष्णीकाम् ॥ ७-३-३३ कुत्सिताल्पाज्ञाते , याचितकं ॥ ७-३-३४ अनुकंपातद्युक्तनीत्योः, पुत्रक एहकि उत्संगके उपविश ॥ ७-३-३५ अजातेर्नृनाम्नो बहुस्वरादियेकेलं वा, अनुकंपितो देवदत्तः देवियः ॥ ७-३-४१ द्वितीयात्स्वरादूर्ध्वं लुक् अनुकंपायां स्वरे प्रत्यये ॥ ७-३-३६ वोपादेरडाकौ च, उपडः उपिलः उपेन्द्रदत्तकः॥ ७-३-३७ऋवर्णोवर्णात् स्वरादेरादेर्लुक् प्रकृत्या च,मातयः॥ ७-३ ३८लुक्युत्तरपदस्य कप्न्, देवी (ते लुग्वा) इच्चापुंसेतीत्वं न, नरदेवका ॥ ७-३-३९ लुक् चाजिनान्तात्, व्याघ्राजिना अनुकंपिता व्याघका नराः ॥ ७-३-४० षड्वर्जैकस्वरपूर्वपदस्य स्वरे लुग् , वागीशोऽनुकंपितो वाचियः, षडिलः ॥ ७-२-४२ सन्ध्यक्षरात्तेन द्वितीयात् सह, कुविलः ॥ ७-३-४३ शेवलाद्यादेस्तृतीयात्, शेवलियः, अकृतसंधेर्लुक्, सु परि-विशाल-वरुण-अर्यमाणः॥ ७-३-४४ क्वचित्तुर्यात्तु, बृहस्पतिकः॥ ७-३-४५ पूर्वपदस्य वा, दत्तियः देविलः॥ ७-३-४३ ह्रस्वे, ह्रस्वो वंशः वंशकः॥ ७-३-४७ कुटीशुंडाद्रः॥ ७-३-४८ शम्या रुरौ ॥ ७-३.४९ कुत्वा डुपः ॥ ७-३-५० कासूगोणिभ्यां तरट्, कासूतर इत्यपि ॥ ७-३-५१ वत्सोक्षाश्वर्षभाद् ह्रासे पित् तरट्॥ ७-३ ५२ वैकाद् द्वयोर्निर्धार्ये डतरः॥ ७-३-५३ यत्तत्किमन्यात्॥ ७-३-५४ बहूनां प्रश्ने डतमश्च वा, यतमः यो वा भवतां पटुः ततरः स वा आयातु ॥ ७-३-५५ वैकात् बहूनां एकस्मिन्निर्धार्ये, पक्षेऽक्, एकतमः ॥ ७-३-५६ क्तात्तमबादेश्चानत्यंते कप्, अनत्यंतं भिन्नं भिन्नकं भिन्नतमकं ॥ ७-३-५७ न सामिवचने क्तात्तमबादेश्च कप्, अर्धमनत्यंतं भुक्तं ॥ ७-३-५८ नित्यं ञजिनोऽण्, व्यावलेखी सांमार्जिनं। महाविभाषा निवृत्ता ॥ ७-३-५९ विसारिणो मत्स्ये ॥ ७-३-६० पूगाद् (अर्थकामप्रधानरः) मुख्य-

काद्-ञ्मौ द्रिः, शैब्यः, द्रित्वाच्छिवयः, देवदत्तकः मुख्यार्थे ॥ ७-३-६१ व्रातादस्त्रियां, (शरीरायासाजीवाः) कापोतपाक्यः, द्रिः ॥ ७--३--६२ वाहीकेष्वब्राह्मणराजन्ये- भ्यः, क्षौद्रक्यः ॥ ७--३--६४ वृकाट्टेण्यण् ॥ ७--३--६५ यौधे- यादेरञ्, युधाकुमाराणां संघः यौधेयः ॥ ७-३-६६ पर्श्वादेरण्, पार्श्वः पर्शवः,स्त्रियां पर्शूः,द्रेर्लुक॥७ ३-६३ दामन्यादेरीयः,दाम- नीयः ॥ ७-४-७२ असकृत्संभ्रमे पदं वाक्यं वा द्विः, हस्त्या- गच्छति २ ॥ ७-४-७४ नानावधारणे, कार्षापणान्माषं माषं देहि, अनियत्तायां माषं ॥ ७ ४ ७५ आधिक्यानुपूर्व्ये, महं रोचते २ मूले २ स्थूलाः ॥ ७--४--७६ डतरडतमौ समानां स्त्रीभावप्रश्ने, सर्वे आढ्या इमे कतरा कतरा कतमा कतमा वाऽऽढ्यता ॥ ७ ४-७७ पूर्वप्रथमावन्यतोऽतिशये, पूर्व २ पचति, अन्येभ्य इति ॥ ७ -४--४८ प्रोपोत्सं पादपूरणे, संसंश्रयत तं जिनं ॥ ७ ४-७९ सामीप्येऽधोऽध्युपरि, अध्य- धि ग्रामं ॥ ७-४-८० वीप्सायां, गृहे गृहेऽश्वाः, जात्येकशेपेतरे- तरक्रमाभिधानेषु न ॥ ७-४-८१ प्लुप् चादावेकस्य स्यादेः वीप्सायां, एकैकः एकैका एकएका, विरामत्वान्न संधिः ॥ ७-४-८२ द्वंद्वं वा, द्वौ द्वौ वा तिष्ठतः॥ ७-४-८३ रहस्यमर्यादो- क्तिव्युत्क्रान्तियज्ञपात्रप्रयोगे, द्वंद्वं मंत्रयंते मिथुनायंते पशवः व्युत्क्रान्ता यज्ञपात्राणि प्रयुनक्ति ॥ ७-४-८४ लोकज्ञातेऽत्यंत- साहचर्ये, द्वंद्वं रामलक्ष्मणौ ॥ ७-४-८५ आबाधे द्विः प्लुप् च स्यादेः, नष्टनष्टः ॥ ७-४-८६ नवा गुणः सदृशे रित् द्विः प्लुप् च, शुक्लं शुक्लं रूपं, पक्षे शुक्लजातीयः ॥ ७-४-८७ प्रियसु- खं चाकृच्छ्रे, सुखसुखेन सुखेन वाऽधीते ॥ ७-४-८८ वाक्यस्य परिवर्जने, परिपरित्रिगर्तेभ्यः परित्रिगर्तेभ्यो वा वृष्टो देवः॥ इति ताद्धितप्रकरणं ॥

पुल्लिंगे किश्तिव् घघञौ, भावे खोऽकर्तृकोऽल् चेमन् । नङ् दः क्निर्नोऽसमाहारे द्वन्द्वोऽश्ववडवाविति ॥ १ ॥ दारप्राणासवो

भूम्नि, स्त्रियामेकस्वरं कृति । ईदूत्प्राण्यङ्गवाचीच्चापात्राद्यतु समाहृतौ ॥ २ ॥ द्विगुर्वान्नाप् नपुंशेपः, स्त्र्युक्ता लिन्मिन्यनिण्यणि । त्रिंशत्याद्याशतात् द्वंद्वे, ह्रस्वेऽल्पे कप् क्वचिच्च तिक् ॥१॥ वर्षा अप्कृत्तिका भूम्नि, वासरः सिकताः समाः । नलस्तुतत्तसंयुक्तरुयान्तं नपुंसकम् ॥ ४ ॥ अकर्तृ द्विस्वरं च मन् ॥ समेऽर्धं सुदिनैकेऽहः, पथः संख्याव्ययोत्तरः। भूमोऽसंख्यात एकार्थे, संख्याऽदन्ता शतादिका ॥ ५ ॥ द्वन्द्वैकत्वाव्ययीभावौ, क्रियाव्ययविशेषणे । कृत्याः क्तानाः खल् जिन् भावे, आत्वात् त्वादिः समूहजः ॥ ६ ॥ गायत्र्याद्यण् स्वार्थेऽव्यक्तमथानञ्कर्मधारयः । तत्पुरुषो बहूनां चेच्छाया शालां विना सभा ॥ ७ ॥ राजवर्जितराजार्थराक्षसादेः पराऽपि च । आदावुपक्रमोपज्ञे, गृहात्स्थूणा गणश्च भात् ॥८॥ सेनाशालासुराछाया निशा वोर्णा शशात्परा । स्त्रीपुंसे तद्धितोऽपत्ये, लाजवस्तदशा बहौ ॥ ९ ॥ पुंनपुंसकलिंगे तु, रात्र एकात् समाहृतौ । स्त्रीक्लीबयोरर्धनावं, व्यणकर्त्रनटौ क्वचित् ॥ १० ॥ चौराद्यमनोज्ञाद्यकञ्, गुणोऽयट्तयटौ पुनः ॥ परलिंगो द्वन्द्वोऽशी डेऽर्थौ वाच्यवदपत्यमितिनियताः। अस्त्यारोपाभावे गुणवृत्तेराश्रयाद्वचनालिंगे ॥ ११ ॥ ( गुणद्रव्यक्रियोपाधिकसर्वादितदन्तसंख्यादिग्बहुव्रीहिपूर्वपदतत्पुरुषतद्धितार्थद्विगुरक्ताद्यणाद्यन्ता गुणवृत्तयः ) प्रकृतेर्लिंगवचने , बाधन्ते स्वार्थिकाः क्वचित् । नन्ता संख्या डतिर्युष्मदस्मच्च स्युरलिंगकाः ॥ १२ ॥ इति लिंग विवेकः ॥

## ॥ उणादयः ॥

१ कृ-वा-पा-जि-स्वदि-साध्यशौ-दृ-स्ना-सनि-जनि-चहीणृभ्य उण्, कारुः शिल्पन्द्रिश्च, वायुः, पायुःपानं भगश्च, जायुरौपधं पित्तं वा, स्वादुः, साधुः, आशु शीघ्रं, दारु काष्टं, स्नायुः, सानुः शृंगं, जानुः राहुः, आयवः पुरुषशकटौपधजीवनेन्द्रपुत्राः, संप्रदानापादानाभ्यामन्यत्र कारके भावे चोणाद्याः,

बहुलम्। २ अः, शरः करः स्तवः। ३ म्लेच्छीडेर्ह्रस्वश्च वा ४ नञः कमिगमिशमिखन्याकामिभ्यो डित्, नगो वृक्षः पर्वतश्च, नाकः स्वर्गः। ५ तुदादिविषिगुहिभ्यः कित्, गुहः स्कन्दो, गुहा दरी, तुदादिर्न गणो.। ६ विन्देर्नलुक् च, विदः। ७ कृगो द्वे च, चक्रं। ८ कालिगादिमनेः सरूपे, मन्मनः। ९ ऋतष्टित् अः सरूपे, दर्दरः पर्वतविशेषः, मर्मरश्छद्मवान्, मर्मरी श्रीः, बाहुल्यान्मर्मरा। १० किच्च, मुर्मुरः, पुर्पुरः फेनः, तिर्त्तिरः संक्रमः, भुर्भुरः संचयः, शिर्शिरः पुंजः। ११ पृपलिभ्यां टित्पिच्च पूर्वस्य, पिप्पली। १२ ऋमिमथिभ्यां चन्मनौ च, मन्मथः। १३ गमेर्जश्च वा, जंगमः गंगमश्चपलः। १४ अदुपान्त्यऋद्भ्यामश्चान्ते, वद दः सरसरः। १५ मषिमसेर्वा, मसमसः मस्मसः। १६ हस्तफलिकषेरा च, हराहरा योग्याचार्यसारंगारण्यक्रमयः। १७ इदुदुपांत्याभ्यां किदिदुतौ च, किलिकिलः चुरुचुरः। १८ जजलतितलकाकोलीसरीसृपादयः। १९ बहुलं गुणवृद्धी चादेः, होलिहिलः हैलिहिलः। २० णेर्लुप्, वज्रधरः, पुण्यकृतो देवाः। २१ भीणुशलिवलिकल्यतिमर्च्यर्चिमृजिकुतुस्तुदाधाराञाकापानिहानञ्शुभ्यः कः, बाहुल्यात्प्रत्ययांतरेऽपि, भेको मंडुके कातरे मेघे, एकः, शल्कः त्राणे घनेऽर्धे करणे, वल्कः दशने त्वचि वाससि, कल्को दंभकषाययोः, अत्को जीवे विधौ वायौ, मर्को वायुर्मनो दैत्यः, अर्कः सूर्यः, मार्कः वायुः, तोकमपत्यं, स्तोकमल्पं, दाको यज्ञः, धाकः स्तंभे जले गवि, राकोऽर्थेऽर्के च दातरि, त्राको धर्मः, काको द्विकः, पाको बालेऽसुरे सानौ, निहाकोऽश्मिणि निर्मोके, निहाका गोधा। २२ विचिपुषिमुषिशुष्यविसृवृशुस्तुभूधूसूनीविभ्यः कित्, विकः कलभः, पुष्क इन्दुः, मुष्कः चौरः, शुष्कः, ऊकः, सृको वायौ वके बाणे, शृगाले निरयेऽपि च, वृकः सूर्ये खले पशौ, शुकः कीरः ऋपिश्च, सुकः कल्पः, भूकः कालाश्छिद्रं च, धूको वायुर्व्याधिश्च, धूका पताका, मूको, नीकः खगो ज्ञाता नीका ज्ञातिः, वीको

वायुर्व्याधिनाशौ वसन्तेऽर्थे मनस्यपि, वीका नेत्रमलं ॥ २३ कृगो वा, कर्कोऽश्वेऽग्नौ मृगे दर्भे, कृकः शिरोग्रीवं ॥ २४ धुयुहिपितुशो दीर्घश्च,पीकतूकौ उपस्थे,शूकः किंशारुः शाकश्च, कल्ककिंजल्कोल्कावृक्कच्छेककेकायस्कादयः उलिः सौत्रः उल्का, वृको मुष्कः ॥ २५ ह्वियो रश्च लो वा, ह्लेको नकुलो, ह्रेको लिंगी ॥ २६ निष्कतुरुष्कोदर्का लर्कशुल्कश्च, अलर्क उन्मत्तश्वा, ॥ २७ दृकॄनृस्तृगृधृवृमृस्तुकुक्षुलंघिचारिचाटिकटिकंटिचणिचपिफलिवमितम्यविदेविवंधिकनिजनिमशिक्षारिकूरिवृतिवल्किसल्ल्यालिभ्योऽकः, दरको भीरुः, करकः कमंडलु, स्तवको गुच्छः, फलकः खेटकं, वमकः कर्मकरः, तमको व्याधिः क्रोधश्च, अवकः शैवलं, देविका नदी, मल्लकः शरावः, सल्लः सौत्रः, अलकः केशः, अलका पुरी॥२८कोः रुरुंटिरंटिभ्यः, कुरवको वृक्षः, कुरंटको वर्णगुच्छे, रंटि प्राणहरणे ॥ २९ क्षुधूंदिरांचितिलिपुलिकुलिक्षिपिक्षुपिक्षुभिलिखिभ्यः कित् , पुलको रोमांचः, कुलकं संयुक्तं, क्षिपको वायुः, क्षुपः सौत्रः गुल्मः, लिखकश्चित्रकृत् ॥ ३० छिदिभिदिपिटेर्वा, भिदकं जलं पिशुनश्च, भेदकं वज्रं, पेटकं संघातं ॥ ३१ कृषेर्गुणवृद्धी च वा ॥ ३२ नञः पुंसेः ॥ ३३ कीचकपेचकमेचकमेनकार्भकधमकवधकलघकजहकैरकैडकाश्मकलमकक्षुल्लकवट्वकाढकादयः, कीचको वंशः, मेनका अप्सराः, अर्भको वालः, धमकः कीटः,क्ते धांतः, वधकं पद्मवीजं, लघकोऽसमीक्ष्यकारी, जहकौ कालक्षुद्रौ, एरको दकतृणजातिः, अश्मका जनपदः, वट्वकस्तृणपुंजः ॥ ३४शलिबलिपतिवृतिनभिपटितटिताडिगाडिभंदिवंदिमंदिनमिकुदुपूमनिखंजिवंधिभ्यः आकः, वर्त्ताका शकुनिः, नभाकः तमः काकश्च, गडाकः शाकः, भंदाकं शासनं, वंदाकश्चीवरभिक्षुः, मंदाकौपधिः, नमाको म्लेच्छः, पत्राका वात्या, मनाका हस्तिनी, खञ्जाक आकरो मंथा दर्व्या खे, बंधकी तनौ॥ ३५ शुभिगृहिविदिपुलिगुभ्यः कित् , पक्षिधात्वर्थभूतग्रामा-

धस्विन्नधान्यपूगफलेषु शुभाकाद्याः ॥३६ पिबेः पिन्पिण्यौ च, शूले तिलादिखले ॥ ३७ मवाकश्यामाकवार्त्ताकवृंताकज्योन्ताकगूवाकभद्राकादयः, मवाको रेणुः, ज्योताकं स्वेदसद्म ॥ ३८ क्रीकल्यलिदलिस्फटिदूषिभ्य इकः, कलिकोर्म्या च कोरके, अलिकं ललाटं, दलिकं दारु, दूषिका नेत्रमलं ॥ ३९ आङः पणिपनिपदिपतिभ्यः, आपणिको वणिक्, आपनिकः स्तावकः, आपादिको मयूरः कालः श्येनो वा ॥ ४० नसिवासिकासिभ्यो णित्, णसि कौटिल्ये,नासिका, कासिका वनस्पतिः॥ ४१ पापुलिकृषिकुशित्राश्चिभ्यः कित्, पुलिको मणिः, कृषिकः पामरः, कुशिकः क्रोष्टुक उलुकश्च ॥ ४२ प्राङः पणिपनिकषिभ्यः, प्रापनीकः पांथः, प्राकापिकः खले चायौ नर्तके माल्यकारिणि ॥ ४३ मुषेर्दीर्घश्च, मूषिक आखुः ॥४४ स्यमेः सीम् च, सीमिकं वल्मीकं ॥ ४५ कुशिकहृदिकमक्षिकेतिकपिपीलिकादयः, कुशिककेतिकौ मुनिभेदौ, हृदिको यादवः, मक्षिका पिपीलिकाः क्षुद्रजीवाः ॥ ४६ स्यमिकपिदूष्यनिमनिमलिवल्यलिपालिकणिभ्य ईकः, स्यमीको वृक्षो, वल्मीकं कृमिजातिः, कषीका कुद्दालिका, अनीकं सेना संग्रामश्च, मनीकः सूक्ष्मः, मलीकं अंजनमरिश्च, अलीकं असत्यं, व्यलीका लज्जा, पालीकं तेजः, कणीकः पटवासः ॥ ४७ जृपदृशृवृमृभ्यो द्वेरश्चादौ, जर्जरीका शतपत्री, पर्परीकोऽग्निः सूर्यः कुररो भक्ष्यं च, दर्दरिको दाडिम इन्द्रश्च, शर्शरीको दुष्टाश्वः शिशुश्च, वर्वरीक उरणः पतत्री, वर्वरीका सरस्वती, मर्मरीकोऽग्निः सूर्यः श्येनश्च ॥ ४८ ऋच्यृजिहृषीषिदृशिमृडिशिलिनिलीभ्यः कित्, ऋजीकं बलं वज्रं स्थानं च, दृशीकं मनोज्ञं, हृषीका रजस्वला, मृडीकं सुखं, निलीकं वृत्तं ॥४९मृदेर्वोऽन्तश्च वा, मृद्वीका मृदीका ॥ ५० स्रृणीकास्तीकप्रतीकपूतीकसमीकवाहीकवाल्हीकवल्मीककल्मलीकातिंतिडीककंकणीकाकिंकिणीकपुंडरीकचंचरीकफर्फरीकझर्झरीकघर्घरीकाद्--

ग्रः, सृणीका वाय्वग्निस्वरुमत्ताः, पतीको वायुरवयवः सुखं च, समीकः संग्रामः, पुंडरीकं पद्मं छत्रं व्याघ्रश्च, फर्फरीकं पल्लवं पादुका च ॥ ५१ मिवमिवादिभल्लिकुहेरुकः, मयुक आतपः, वमुको जलदः, भल्लुक ऋक्षः, कुहुकमाश्चर्ये ॥ ५२ संविभ्यां कसेः, संकसुकः सुकुमारः परापवादी श्राद्धाग्निश्च, संकसुकं व्यक्ताव्यक्तं संकीर्णं च, विकसुको गुणवादी परिश्रांतश्च ॥ ५२ क्रमेः क्रम् च वा, क्रमुको वंधः, क्रमुकः पूगतरुः ॥ ५३ कामितिमेर्दोऽन्तश्च ॥ ५४ मडेर्मड् च ॥ ५५ कण्यणेर्णित्, काणुको हिंस्रः काकश्च, काणुकमाणुकं च नेत्रमलं ॥ ५६ कंचुकांशुकनंशुकपाकुकहिवुकचिवुकजंवुकचुलुकचूचुकोल्मुकभावुकपृथुकमधुकादय, कंचुकं कूर्पासः, नंशुकश्चरणरेणुश्चंद्रः प्रावरणं च, हिवुकं पातालं, चुलुंप् उच्छेदे सौत्रः, चूचुकः स्तनाग्रं, भावुको भगिनीपतिः, पृथुकः शिशुः, मधुकं यष्टिमधु॥ ५८ मृमन्यंजिजलिवलितलिमालिमल्लिभालिमंडिबंधिभ्यः ऊकः, मरूको मृगकेकिनोः, अंजूको हिंस्रः, वलूको मत्स्यः, तलूको त्वक्कृमिः, मलूकः सरोजशकुनिः ॥ ५९ शल्यलेर्णित्, वलवानक्षिमलं च ॥ ६० कणिभल्लेर्दीर्घश्च वा, कणूको धान्यचयः, काणुकः पक्षी, काणुकं तमोऽक्षिमलं वा ॥ ६२ शंबूकशांबूकवृधूकमधूकोलूकोरुवूकवरूकादयः, वृधूकं जलं, उरुवूक एरंडः ॥ ६३ किरोऽको रो लश्च वा, करंकः समुद्रः, कलंकं लांछनं ॥ ६४ रालापाकाभ्यः कित्, कंकः पक्षी ॥ ६४ कुलिचिरिभ्यामिकक्, कुलिका चटका, चिरिकं जलयंत्रं ॥ ६५ कलेरविंकः, गृहचटकः ॥ ६६ क्रमेरेलकः, उष्ट्रः ॥ ६७ जीवेरातृको जैव् च, आयुष्मद्वैद्येन्दुमेघात्राः ॥ ६८ ह्वभूलाभ्य आणकः, भवाणको गृहपतिः, लाणको हस्ती ॥ ६९ प्रियः कित्, पुत्रः ॥ ७० धाल्रशिंघिभ्यः, छिद्रपिधानं कालो नासिकामलं च ॥ ७१ शीभीराजेश्चानकः, शयानकोऽगजरः शैलश्च, भयानका राहुभीमव्याघ्रवराहाः, शिंघानक

आयुः पुरीषं च ॥ ७२ अणेर्डित्, पटहः ॥ ७३ कनेरीनकः, अक्षितारा ॥ ७४ गुडः इंधुकएधुकौ, नगरं तृणं च ॥ ७५ वृतेस्तिकः ॥ ७६ कृतिपुतिलतिभिदिभ्यः कित्, पुतिलती सौत्रौ, लत्तिका गौर्गोधा च, गोर्गृहगोलिका, भित्तिका कुड्यं चूर्णं शरावती च ॥ ७७ इष्यशिमासिभ्यस्तकक् ॥ ७८ भियो द्रे च ॥ ७९ हृरुहिपिडिभ्य ईतकः, पथ्याद्रुभेदकरहाटाः ॥ ८० कुषेः कित् ॥ ८१ बलिविलिशलिदमिभ्य आहकः, बलाहकौ मेघवातौ, वज्रवायुशिष्याः शेषाः ॥ ८२ चंडिभल्लिभ्यामातकः, चंडातकं नर्तक्यादिवासः॥८३श्लेष्मातकाम्रातकामिलातकपिष्टातकादयः॥८४ शमिमनिभ्यां खः, शंखः कंबुर्निधिश्च, मंखौ कृपणमागधौ, मंखा मंगलं ॥ ८५ इयतेरिच्च वा, शिखा चूडा ज्वाला च, विशिखा आपणः, विशिखो बाणः विशाखा नक्षत्रं, विशाखः स्कंदः ॥ ८६ पुमुहोः पुन्मुरौ च, पुंखः मूर्खः ॥ ८७ अशेर्डित्, खं आकाशमिंद्रियं च, सुःखं दुखं॥ ८८उषेः किल्लुक् च, उखा स्थाली॥८९ महेरूच्चास्य वा, मुखं, मखो यज्ञ ईश्वरश्च ॥ ९० न्युंखादयः ॥ ९१ मयेधिभ्यामूखेखौ, मयूखो रश्मिः, एधिखो वराहः ॥ ९२ गम्यमिरम्यजिगद्यदिगडिखडिगृभृवृस्वृभ्यो गः, वेगस्त्वरा रेतश्च, अङ्गौ वह्निसमुद्रौ, भर्गौ सूर्यरुद्रौ ॥ ९३पूमुदिभ्यां कित्, पूगौ संघक्रमुकौ ॥ ९४ भृवृभ्यां नोऽन्तश्च, विभ्रमभ्रमरस्वर्णा भृंगाः, वृंगः उपपतिः पक्षी च ॥ ९५ द्रमो णिद्वा, द्रांगं शीघ्रं, द्रागः पांशुः, द्रंगं नगरं, द्रंगा शुल्कशाला ॥ ९६ शृंगशार्ङ्गादय ॥ ९७ तडेरागः ॥ ९८ पतितमितृपृकृगृल्वादेरंगः, पतंगः शलभेऽर्के वौ, तमंगो हर्म्यनिर्यूहः, परंगः खगवेगयोः ॥९९स्तृभृन्वृभ्यो णित्, सारंगौ मृगचातकौ, वारंगः खगकांडयोः॥ १०० मनेर्मत्मातौ च ॥ १०१ विडिविलिकुरिमृदिपिशिभ्यः कित्, विडंगो गृहावयवः, पिशंगो वर्णः ॥ १०२ स्फुलिकलिपाभावाधालाशोऽय

इंगक्, दिंगोऽध्यक्षः, धिंगः श्रेष्ठी, शिंगः किशोरः॥ १०३ भलेरिदुतौ चातः, भुलिंग ऋपिपक्षिणोः॥१०४ अदेर्णित् ॥१०५ उच्चिलिंगादयः, दाडिमी ॥ १०६ माङस्तुलेरुंगक् ॥ १०७ कमितमिशमिभ्यो डित्, तुंगो महावर्ष्मा, शुंगाः कंदल्यः॥ १०८ सर्तेः सुर् च, गूढाध्वा ॥ १०९ स्थार्तिजनिभ्यो घः॥ ११० मघाघंघाऽघदीर्घादयः ॥ १११ सर्त्तेरघः, मधुमक्षिका ॥ ११२ कूपूसामिणभ्यश्चट् दीर्घश्च, कूचो हस्ती, कूची प्रमदा चित्रभांडं विकारश्च, समीच ऋत्विक्, समीचं मिथुनयोगः, समीची भूः ॥ ११३ कूर्चचूर्चादयः, श्मश्रु आसनं च, चूर्चः बलवान् ॥ १४ कल्यविमर्दिमाणिकुकणिकुटिकृभ्योऽचः, गणकोच्चतरमत्तपक्षिवर्मकुणपद्रुभेदधान्यावपनानि ॥ १५ ऋकचादयः ॥ १६ पिशेराचक् ॥१७ मृत्रपिभ्यामिचः, त्रपिचा कुथा॥ १८ त्रियतेरीचण् ॥ १९ लपेरूचः कश्च लः, कुचः ॥ २० गुडेरूचट्॥ २१ सिवेर्डित्, सूचः पिशुनः ॥ २२ चिमेर्डोचडंचौ, मोचा कंदली, चोचो द्रुः ॥२३ कुटिकुलिकल्युदिभ्य इंचक्, कुटिंचः क्षुद्रकर्कटः, कुलिंचो राशिः, उद आघाते सौत्रः, उदिंचः कोणः परपुष्टश्च ॥ २४ तुदिमदिपत्रादिगुगमिकचिभ्यश्छक्, पच्छः शिला, कच्छः कूर्मपादः कुक्षिश्च ॥ २५ पीपूङो ह्रस्वश्च ॥ २६ गुलुञ्छापिलिपिंछैधिच्छादयः, स्तबकरक्षोनगाः ॥ २७ वियो जक्, वीजं ॥२८ पुवः पुन्च ॥ २९ कुवः कुब्कुनौ च, कुब्जो गुच्छः, कुंजो हनुः, निकुंजो गहनं॥ ३० कुटेरजः॥ ३१ भिषेर्भिषाभिष्णौ च वा, भिषिः सौत्रः, औषधं वैद्यश्च ॥ ३२ मुर्वेर्मुर् च ॥ ३३ वलेर्वोऽन्तश्च वा ॥ ३४ उटजादयः । ३५ कुलेरिजक्, मानं ॥ ३६ कृगोऽजः ॥ ३७ झमेर्झः ॥ ३८ लुपेष्टः ॥ ३९ नमितनिवनिजनिसनो लुक् च ॥ ४० जनिपणिकिजुभ्यो दीर्घश्च, किजू सौत्रः, जूटः मौलिः ॥ ४१ घटाघाटाघंटादयः, घाटा स्वांगं ॥ ४२ दिव्यवि-

शुकुकर्विशाकिकंकिकृपिचपिचामिकम्येधिकर्किमर्किकखि-
तृकृसृस्वृभ्योऽटः, अवटौ कूपप्रपातौ, श्रवटश्छत्रं, कवट
उच्छिष्टं, कंकटः सन्नाहः, कंकटं सीमा, कर्पटं वासः, चपटो
रसः, चमटो घस्मरः, कमटो वामनः, एधटो वल्मीकः, कर्कि
मर्कि गत्यर्थौ सौत्रौ, कर्कटः कपिलः कुलीरश्च, कक्खटः कर्कशः,
तरटः पीनः, करटौ काककलभौ, भरटौ भृत्यकुलालौ, वरटः
प्रहारः ॥ ४३ कुलिविलिभ्यां कित् ॥४४ कपटकीकटादयः,
कीकटः कृपणः ॥ ४५ अनिगृपृवृललिभ्य आटः, अनाटः
शिशुः, शराटः शकुनिः, पराट आयुक्तः, वराटः सेवकः ॥ ४६
सृस्रुपेः कित्, स्राटः पुरस्सरः, सृपाटोऽल्पः, सृपाटी उपानत्
कुप्यं अल्पपुस्तकश्च ॥ ४७ किरो लश्च वा, किराटौ म्लेच्छ-
वणिजौ, किलाटो भक्ष्यं ॥ ४८ कपाटविराटशृंगाटपृपुन्ना-
टादयः, कवाटः, विराटो राजा, शृंगाटो विपणिमार्गः ॥ ४९
चिरेरिटो भ् च, चिर्भिटी ॥ ५० टिण्टश्चर् च वा, चिरिण्टी
प्रथमवयाः स्त्री ॥ ५१ तृकृकृपिकंपिकृषिभ्यः कीटः, तिरीटः
मुकुटं वेष्टनं च, किरीटं मुकुटं हिरण्यं च, कृपीटं हिरण्यं जलं च,
कृषीटं जलं ॥ ५२ खंजेररीटः, खंजनः ॥ ५३ कृजृदृवृभृभ्य
उट उडश्च, दरुटो बिडालः, वरुटो मेषः, भरुटोऽपि ॥ ५४
मंकेर्मकुमुकौ च ॥ ५५ नकुटकुर्कुटोत्कुरुटमुरुटपुरुटादयः ॥
५६ दुरो द्रः कूटश्च दुर्च, दुर्दुरूटो दुर्मुखः॥५७ बंधेः,बधूटी ॥
५८ चपेरेटः॥ ५९ ग्रो णित् ॥ ६० कृशकृशाखेरोटः, करोटो
भृत्यः शिरः कपालं च, शकोटो बाहुः ॥ ६१कपोटबकोटाक्षो-
टकर्कोटादयः, कपोटौ वर्णकितवौ, बकोटो बकः,कर्कोटो नागः॥
६२ वनिकणिकाश्युषिभ्यष्ठः, काष्ठा दिगवस्था च ॥ ६३
पीविशिकुणिपृषिभ्यः कित्, कुंठस्तीक्ष्णः, पृष्ठोऽकुशः ॥६४
कुषेर्वा ॥ ६५शमेर्लुक् च वा, शंठो नपुंसकं ॥ ६६पष्ठैधिठा-
दयः,पर्वतो वनं च॥६७मृजृगृकम्यमिरमिरपिभ्योऽठः,मरठः
प्राणकण्ठयोः, जरठः कठोरः, शरठः शस्त्रं पापं च, कमठाः

मयूरकूर्मवामनाः, रमठो म्लेच्छो देशो देवश्विलातानां, रपठौ विज्ञदर्दुरौ ॥ ६८ पंचमाड्डुः, पंडो वनं वृषभश्च, पण्डः शण्डः, गंडः पौरुषयुक्तः, मंडोऽग्रं रश्मिरन्नं च, वंडोऽल्पशेफो निश्चर्माग-शिश्नश्च ॥ ६९ कण्यणिखनिभ्यो णिद्वा, कांडः शरे पर्वणि, कांडं पर्वणि भूषणे ॥ ७० कुगुहुनीकुणितुणिपुणिमुणिशुन्यादिभ्यः कित्, कुडौ वटहले, गुडा सन्नाहः, हुडौ मूर्खमेषौ, कुंडो जारजातोऽपद्विद्रियश्च, शुंडा सुरा करिकरश्च ॥ ७१ ऋसृतृ-व्यालिह्यविचामिवामियामिचुरिकुहेरडः, अरडस्तरुः, सरडौ नागपादपौ, व्याडा दुःशीलहिंस्रपशुभुजंगाः, यमडो वनस्पति-र्युग्मं च, चोरडश्चौरः, कुहड उन्मत्तः ॥ ७२ विहडकहोडकुरड-केरडक्रोडादयः,विहडौ मुग्धपक्षिणौ,कुरडो मार्जारः, क्रोडोऽकः किरिश्च ॥ ७३ जृकृतृगृसृभृवृभ्योऽण्डः, तरंडौ वायुप्लवौ, शरंडौ हिंस्रशस्त्रे, सरंडा भूतव्राताःनिलेपीकाः, वरंडः कुड्यं ॥ ७४पूगो गादिः,विकलांगो युवा च पोगंडः ॥ ७५वनस्त च ॥ ७६ पिचंडैरंडखरंडादयः॥ ७७लगेरुडः ॥ ७८ कुशेरुंडक्, वपुष्मान् ॥ ७९ शमिषणिभ्यां ढः, पण्ढः ॥ ८०कुणेः कित्, कुण्ढः धूर्तः ॥८१नञः सहेः षा च,अषाढा भं ॥८२इणुर्विशा-वेणिपृकृवृतृजृदसृपिपणिभ्यो णः, एणः, उर्णा, शाणः परिमाणं, वेण्णा, पर्ण पत्रं शिरश्च, जर्णाः कर्केन्दुविद्रुमाः, दर्णः पर्णं, पण्णं व्यवहारः ॥ ८३ घृवीह्वाशुष्युषितृषिकृष्यर्त्तिभ्यः कित्, शुष्णो निदाघः कृष्णो विष्णुर्मृगो वर्णः, ऋणं जलदुर्गभूमिः ॥ ८४ द्रोर्वा, द्रुणा ज्या,द्रोणः पाठाचार्यः, द्रोणी नौः ॥ ८५ स्थाक्षुतोरूच्च, क्षूणं मन्तुः ॥ ८६ भ्रूणतृणगुणकार्ष्ण-तीक्ष्णश्लक्ष्णाभीक्ष्णादयः, कार्ष्णः शिल्पी, श्लक्ष्णमकर्कशे सूक्ष्मे ॥ ८७ तृशृकृपृभृवृश्रुरुराहिलक्षिविचाक्षिचुक्किवुक्कि-तंग्यंगिमंकिकंकिचारिसमीरेरणः,तरणं गृहं,वरणं सेतुबंधेऽगे, श्रवणौ कर्णभिक्षुकौ, रवणो द्वौ खगे भृंगे, करभद्वग्न्यानिलेपु च, वुक्कणौ श्वा वावदूकः ॥ ८८ कृगृपृकपिवृपिभ्यः कित्, गिरणा

आंचार्यग्रामवारिदाः ॥ ८९ धृषिवहेरिचोपान्त्यस्य, धिषणा, विहणः पाठ ऋषिश्च ॥ ९० चिक्कणकुक्कणकूकणकुंकणत्रवणोल्वणोरणलवणवंक्षणादयः, वंक्षण उरुमूलसंधिः ॥ ९१ कृषिवृषिविषिधृषिभ्राषियुषिद्रहिग्रहेराणक्, विषाणं शृंगं करिदंतश्च, युषिः सेचने सौत्रः, द्रहाणो मुखरः ॥ ९२ पषो णित् ॥९३ कल्याणपर्याणादयः ॥ ९४ द्रुहबृहिदक्षिभ्य इणः ॥ ९५ ऋद्रुहेः कित्, इरिणं कुंजोषरोषादुर्गेषु, द्रुहिणो ब्रह्मा ॥ ९६ ऋकृवृधृदारिभ्य उणः, करुणं दैन्यं, धरुण आयुक्तो लोकश्च ॥ ९७ क्षः कित्, क्षुणो व्याधिः, क्षाम क्रुन्मत्तौ ॥ ९८ भिक्षुणी ॥ ९९ गादाभ्यामेष्णक्, गेष्णं साम सुखं च, सुगेष्णा किन्नरी, देष्णो वाहुर्वदान्यश्च ॥ २०० दम्यमितमिमावापूधूगृजृहसिवस्यसिवितसिमसीणभ्यस्तः, अंतो धर्मः, तंतः खिन्नः, मातं प्रविष्टमंतश्च, पोतोऽग्नौ नावि बालके, धौताः शठधूमवायवः, जर्त्तः प्रजनने नृपे, मस्तं मूर्धा, एतोऽनिले मृगे पांथे ॥ २०१ शीरीभूदूमूघृपाधागृचित्यर्त्यजिपुसिमुसिबुसिविसिसिरमिधुर्विपूर्विभ्यः कित्, रीतं सुवर्णं, पीतं हितं, ऋतं सत्यं, अक्तः प्रेते मिते व्यक्ते, बुस्तः प्रहसनं, बिस्तं सुवर्णमानं, पूर्तः पुण्यं ॥ २ लूप्रो वा, लोतो बाष्पं लवनं वस्तश्च, मर्त्तः ऋषिः ना ॥ ३ सुसितनितुसेर्दीर्घश्च वा, सुतः सारथिः, सीता हलाध्वा जानकी सस्यं, तुस्ता जटा प्रदीपनं च ॥ ४ पुत्तपित्तनिमित्तोतशुक्ततिक्तलिप्तसूरतमुहूर्तादयः, सूरतो दांतः ॥५कृगो यङः, चेक्रीयितः ॥ ६ इवर्णादिर्लुपि, चर्करितं ॥ ७ हृपृभृमृशीयजिखलिवलिपर्विपच्यमिनमितमिदाशिहर्यिकंकिभ्योऽतः, दरत आदरः, परतः कालः, मरता मृत्यग्निजंतवः, शयतो मयौ विधौ स्वप्ने, पचतः पालकेऽर्केऽग्नौ, रोगे जीवेऽन्तकेऽमतः, नमतौ नटनिर्जरौ, तमतः निर्वेदी धूम आकांक्षी, हर्यतोऽश्वे चरे रश्मौ ॥ ८ पृषिरंजिसिकिकालावृभ्यः कित्, मृगरूप्यवालुकागोत्रक्रद्र-

ततिनियमाः॥९कृतृकल्यलिचिलिविलीलिलानाथिभ्य आतक्, किरातः, त्रातः संघः, कलातो ब्रह्मा, विलातः शवाच्छादनवस्त्रं, इलातो नगः, नाथात आहारः प्रजापतिश्च ॥ १० हृश्यारुहिशोणिपलिभ्य इतः, श्येतः श्येने मृगे मत्स्ये ॥११ नव आपेः, नापितः ॥ १२ कुशिपिशिपृषिकुषिकुस्युचिभ्यः कित्, कुशितं कुपितं च पापे, पृषितं वारिबिंदु पापं च, कुसितं श्लिष्टं, उचितं स्वभावो योग्यं चिररूढं ॥ १३ हृग इतण्, हारीत ऋषिः पक्षी च ॥ १४ अदो भुवो डुतः, अद्भुतं ॥ १५ कुलिमयिभ्यामूतक्, मयूता वसतिः ॥ १६जीवेर्मश्च, जीमूतः पर्वते मेघे ॥ १७ कवेरोतः प् च ॥ १८ आस्फायोर्डित् ॥१९ जृविशिभ्यामन्तः, जरन्तौ वृद्धमहिषौ, वेशन्तः पल्वले वल्लभे दिवि ॥ २० रुहिनंदिजीविप्राणिभ्याष्टिदाशिषि, नंदंतौ हर्षसुहृदौ, प्राणंती स्त्री। २१ तृजिभूविदिवहिवासिभास्यदिसाधिमादिगडिगंडिनंदिरेर्णिभ्यः,तरन्तो दर्दुरे सूर्ये, ध्वजे रथाणौ जयन्तः, भवंतः कालः, वहन्तो रथाणुर्वायुश्च, साधयन्तो भिक्षुः, गडंतो मेघः, गंडयन्तो मेघः, नंदयन्तः नृपे स्वर्णे ॥ २२ सीमन्तहेमन्तभदंतदुष्यंतादयः ॥ २३ शकेरुंतः ॥ २४ कषेर्डित् ॥ २५ कमिग्रुगार्त्तिभ्यस्थः, प्रोथः प्रियो युवा घोणा ॥ २६ अवाङ्गोऽच्च वा, अवगाथोऽक्षसंघातेऽध्वनि साम्नि प्रगे सवे ॥ २७ नीनूरमितृतुदिवचिरिचिसिचिश्विहनिपागोपावोङ्गाभ्यः कित्, नीथं जलं, सुनीथो धर्मिष्ठो विप्रश्च, नूथं तीर्थं, उक्थं शास्त्रं, हथोऽध्वा कालश्च, पीथं जलं प्रक्षणं च, पीथस्तु मकरे रवौ ॥ २८ न्युद्भ्यां शीङः, उच्छीथः प्रश्नः टिट्टिभश्च ॥ २९ अवभृनिर्ऋसमिणभ्यः, निर्ऋथो निकायः, निर्ऋथं स्थानं, समिथः संगमः, समिथं समूहः ॥ ३० सर्तेर्णित् ॥ ३१ पथयूथगूथतिथनिथसूरथादयः, कुथः कालः प्रावृट् च, सूरथो दांतः ॥ ३२ भृशीशपिशमिगमिरमिवंदिवंचिजीविप्राणिभ्योऽथः, भरथोऽग्नि-

लोकपालश्च, शयथा मत्स्यवराहप्रदोषाः, शपथः प्रत्ययकरणे आक्रोशे च, गमथः पंथाः पांथश्च; रमथः प्रहर्षः, इभ्ये वायौ जले कूर्मे, धार्मिकेऽन्ने च जीवथः, प्राणथो बलवानीशः ॥ ३३ उपसर्गाद्वसः ॥ ३४ विदिभिदिरुदिद्रुहिभ्यः कित्, विदथो यज्ञे विज्ञे रणेऽध्वर्यौ ॥ ३५ रोर्वा, रूवथः पक्षी, रवथ आक्रन्दः ॥ ३६ जॄवृभ्यामूथः, कायाग्न्यग्राध्वपापेषु जरूथः, वरुथो वर्म सेनांगं च ॥ ३७ शाशपिमनिकनिभ्यो दः, शादो बंधे मृदौ स्वर्णे ॥ ३८ आपोऽप्च ॥ ३९ गोः कित् ॥ ४० वृतुकुसुभ्यो नोऽन्तश्च, सुन्दो दानवः ॥ ४१ कुसेरिदेदौ, ऋणवृद्धिजीविके ॥ ४२ इंग्यर्विभ्यामुदः ॥ ४३ ककेर्णिद्वा, काकुदं तालु, ककुदं स्कन्धः ॥ ४४ कुमुदबुदबुदादयः ॥ ४५ ककिमकिभ्यामंदः ॥ ४६ कल्यलिपुरिकुलिकुणिमणिभ्य इंदक्, अलिन्दो भाजने स्थाने, कुणिन्दो म्लेच्छशब्दयोः ॥४७ कुपेर्व् च वा ॥ ४८पृपालिभ्यां णित् ॥ ४९यमेरुंदः ॥

५० मुचेर्डुकुंदकुकुन्दौ ॥ ५१ स्कंद्यमिभ्यां धः, स्कंधोऽसे ककुदे भागे, अंधः ॥ ५२ नेः स्यतेरधक्, निषधः ॥ ५३ मंगेर्नलुक् च ॥ ५४ आरगेर्वधः ॥ ५५ परात् श्रो डित्, परश्वधः ॥ ५६ इषेरुधक्, याश्चा ॥ ५७कोरंधः ॥ ५८प्याधापन्यनिस्वपिस्वदिवस्यज्यतिसिविभ्यो नः, प्यानौ चन्द्रसमुद्रौ, पन्नं सन्नं जिह्वा च,स्वप्नं मनो विकारश्च, वस्नं वासो मूल्यं मेण्ढ्र आगमश्च,वेनः प्रजापतिः ध्यानी राजा वायुर्यज्ञः प्राज्ञो मूर्खश्च, अत्न आत्मा वायुर्मेघः प्रजापतिश्च, स्योनं मुखं समुद्रः सूर्यो रश्मिश्च ॥ ५९ षसेर्णित् ॥ ६० रसेर्वा, रास्ना धेनुः, रस्ना जिह्वा, रस्नस्तुरगो दंडश्च ॥ ६१ जीर्णशीदीबुध्यविमीभ्यः कित्, इनाः स्वाम्यर्कराजेशाः, बुध्नं मूलं रुद्रश्च ॥ ६२ सेर्वा, सिनः कायः ॥ ६३ सोरू च, सूना घातस्थानं दुहिता पुत्रः प्रक्सिनः कायः ... तिश्च ॥ ६४रमेस्त च ॥६५ कुशेर्वृद्धिश्च, कौश्नः श्वापदः॥६६ द्युसुनिभ्यो माडो डित्, सुम्नं सुखं॥६७ शीङः सन्वत्, शिश्नं

॥६८दिननग्नफेनचिह्नब्रध्नधेनस्तेनच्यौक्नादयः, ब्रध्नो ब्रह्मा रविः स्वर्गः, धेना माता सरस्वती, धेनोऽब्धिः, च्यौक्नोऽक्षस्थानं क्षीणपुण्योऽनुजश्च ॥ ६९ रुचसिरसिरुचिजिमस्जिदेविस्यंदिचंदिमंदिमंडिदहिवह्यादेरनः, रोचनश्चंद्रः, विरोचनोऽसुराग्न्यर्केन्दुषु, जयनं ऊर्णापटः, मन्दनं स्तोत्रं, मदनो द्रुः कामो मधूच्छिष्टं च ॥ ७० अशो रश्चादौ ॥ ७१ उन्देर्नलुक् च ॥ ७२ हनेर्घतजघौ च, घतनं पापकर्मा निर्लज्जश्च ॥ ७३ तुदादिवृजिरंजिनिधाभ्यः कित्, तुदनः क्षिपणः सुरणो वुधनः, वृजनमंतरिक्षं निवारणं मुंडनं च, निधनमंतः ॥ ७४ सूधूभूभ्रास्जिभ्यो वा, सुवनोऽङ्कुरेऽर्के प्रादुषि, धुवनो धूमे वाय्यग्न्योः, धुवनं एधः ॥ ७५ विदनगगनगहनादयः॥७६संस्तुस्पृशिमंथेरानः, संस्तवानः सोमो होता वाग्मी च, संस्पर्शानो मनोऽग्निश्च ॥ ७७युयुजियुधिवुधिमृशिहशीशिभ्यः कित्, दशानो लोकपालः ॥ ७८ मुमुचानयुयुधानाशिश्विदानजुहुराणजिह्नियाणाः, मेघसाहसिकदुराचारकुटिलेषु ॥७९ ऋजिरंजिमंदिसह्यर्हिभ्योऽसानः, ऋजसानः मेघः श्मशानं च, रंजसानः धर्मो मेघश्च, मंदसानः स्वप्ने जीवे रवौ हंसे, सहसानो दृढो मयूरश्च, अर्हसानश्चंद्रो हयश्च ॥ ८०रुहियुजेः कित्, विटपो धर्मश्च ॥ ८१ वृधेर्वा, गर्भे गिरौ मृत्यौ पुंसि ॥ ८२ श्याकठिखलिनल्यविकुंडिभ्य इनः, अविनं जलं मृगो नाशो वह्निर्गुप्तिर्विधिर्नृपः ॥ ८३ वृजितुहिपुलिपुटिभ्यः कित्, तुहिनं हिमं तमश्च, वृजिनं पापं कुटिलं च ॥ ८४ विपिनाजिनादयः ॥ ८५ महेर्णिद्वा, महिनं राज्यं शयनं च ॥ ८६खलिहिंसिभ्यामीनः ॥ ८७ पठेर्णित् ॥ ८८ यम्यजिशक्यर्जिशीयजितॄभ्य उनः, वयुनं विज्ञानमंगं च, अर्जुनः ककुभे वृक्षे ॥ ८९लषेः श् च ॥ ९० पिशिमिथिक्षुधिभ्यः कित् ॥९१फलेर्गोऽन्तश्च ॥९२वीपतिपटिभ्यस्तनः ॥९३पृपूभ्यां कित् ॥९४कृत्यशौभ्यां स्नक्, अक्ष्णं नेत्रं व्याधिरखंडं रज्जुश्च ॥९५अर्तेः शसा-

नः, पंथा इपुरग्निश्च ॥ ९६ भापाचणिचमिविषिसृपृतृशी-
तल्यलिशमिरमिवपिभ्यः पः, भापः सूर्यः, वेष्पः परमात्मा
स्वर्ग आकाशं च, कूपे नेः, पर्पः प्लवोऽश्वः शंखोऽब्धिः, शेपः
पुच्छं, तल्पं शय्यांगं दारा युद्धं च, शंपा विद्युत् कांची च, वापः
पिता ॥ ९७ युसुकुरुतुच्युस्त्वादेरूच्च, च्यूपः सूर्यो वायुर्युद्धं
च ॥ ९८कृगृसृभ्य ऊर्चान्तस्य, शूर्पं॥ ९९शदिबाधिखनि-
हनेः ष् च, खष्पो बलात्कारो दुर्मेधाश्च ॥ ३०० पंपाशिल्पा-
दयः ॥ १ क्षुचुपुपूभ्यः कित्, क्षुपो गच्छः, चुपं मंदगमनं ॥
२नियो वा, नीपो नये पुरोहिते द्रुमे, नेपं जले याने॥३उभ्यवे-
र्लुक् ॥ ४ दलिवलितालिखजिध्वजिकाचिभ्योऽपः, वलपः
कर्णिका, खजपो मंथाः ॥५ भुजिकुतिकुटिविटिकुणिकुष्यु-
षिभ्यः कित्, कुतिः सौत्रः, कुपपो विन्ध्यः ॥ ६ शंसेः
श इच्चातः ॥ ७ विष्टपोलपवातपादयः, उलपं पद्मं जलं
च ॥ ८ कलेरापः ॥ ९ विशोरिपक्, तृणं वेश्मासनं पद्मं ॥१०
दलेरीपो दिल् च ॥ ११ उडेरुपक् ॥ १२ अश ऊपः पश्च॥
१३ सर्त्तेः षपः ॥ १४ रीशीष्यां फः, रेफः कुत्सितः ॥ १५
कालिगलेरस्योच्च ॥ १६ शफकफाशिफादयः ॥ १७ वलि-
नितानिभ्यां बः ॥ १८शम्यमेर्णिद्वा, शंबो वज्रं तोत्रमरित्रं च,
आंबोऽपह्नवः ॥ १९ शल्यलेरुच्चातः, उल्बं रूप्यं, शुल्बं
बभ्रुस्तरक्षुश्च ॥ २०तुंबस्तंबादयः ॥ २१ कुकडिकटिवटेरंबः,
कटंबः शैलः, वटंबस्तृणपुंजः॥ २२ कदेर्णिद्वा ॥ २३शिलवि-
लादेः कित् ॥ २४हिंडिबिलेः किंबो नलुक्च ॥ २५डीनी-
बन्धिगृधिचालिभ्यो डिंबः ॥ २६ कुदृयुंदिचुरितुरिपुरिमु-
रिकुरिभ्यः कुंब।, उदुंबः समुद्रः,चुरुंबतुरुंबौ गहने,कुरुंबोऽकुरः,
ने राशौ ॥ २७ गृहरमिहनिजन्यतिदलिभ्यो भः, हम्भा
धेनुनादः, जंभो दैत्ये दशने च, दल्भो वल्कलं ॥२८इणः कित्॥
२९ कृगृशलिकालिकाडिगर्दिरासिरामिवाडिवल्लेरभः, रम-
भो हर्षे, वड सौत्रः आग्रहणे, वलभी ॥ ३० सनेर्डित् ॥ ३१

ऋपिवृपिलुसिभ्यः कित्, हिंस्रे वने च मत्तेभे लुसभः, लुसि सौत्रः ॥३२सिटिकिभ्यामिभः सैरट्टिौ च ॥३३ ककेरुभः, अर्जुनः॥३४कुकेः कोऽनश्च ॥ ३५दमो दुंड् च॥ ३६ कृकलेरंभः ॥ ३७ काकुसिभ्यां कुंभः ॥३८अर्त्तीरिस्तुसुहृसृघृधृशुक्षियक्षिभावाव्याधापायावलिपदिनीभ्यो मः, अर्मोऽक्षिरोगो ग्रामः स्थलं च, इर्मं व्रणः, सर्मो नदः कालश्च, धामं निलयस्तेजश्च, व्यामो वक्षः, वल्मो ग्रंथिः ॥ ३९ ग्रसिहाभ्यां ग्राजिह्मौ च ॥ ४० विलिभिलिसिधीन्धिधूसूश्याध्यारुसिविशुपिसुपीपिसुहिगुधिदसिभ्यः कित्, विलमं प्रकाशं,भिलिः सौत्रः भास्वरं, सूमो रविः,सूमं नभः,स्यूमो रश्मिर्दीर्घश्च, स्यूमं जलं, ईध्मः वाते बाणे वसंते च, सुष्म आखुः, युध्मः शरत् शूरः शत्रुः संग्रामश्च, दस्मो वह्नौ मखे हीने ॥ ४१ क्षुहिभ्यां वा, क्षुमा अतसी, हेमं स्वर्णं ॥४२ अवेर्ह्रस्वश्च वा, उमा गौरी कीर्तिश्च, ऊमं नभ ऊनं पुरं च ॥ ४३सेरी च वा ॥४४ भियः पोऽन्तश्च वा ॥ ४५ तिजियुजेर्गू च, तिग्मं तीक्ष्णं दीप्तं तेजश्च ॥ ४६ रुक्मग्रीष्मकूर्मसूर्मजाल्मगुल्मघ्रोमपरिस्तोमसूक्ष्मादयः॥ ४७ सृपृप्रथिचरिकडिकर्देरमः, सरमा शुनी ॥ ४८ अवेर्धं च वा ॥ ४९ कुट्टिवेष्टिपूरिपिबिसिचिगण्यर्पिवृमहिभ्य इमः ॥ ५० वयिमखचिमादयः ॥ ५१ उद्घटिकुल्यलिकुथिकुरिकुटिकुडिकुसिभ्यः कुमः, उद्घटुमः परिक्षेपः, कुलुमः उत्सवः, अलुमं प्रसाधनं नापितोऽग्निश्च, कुथुमं मृगाजिनम्, कुसुमः कारुः भाजनं च, कुडुमा भूमिः ॥ ५२ कुंदुमलिंदुमकुंकुमविद्रुमपट्टुमादयः ॥ ५३ कुथिगुधेरूमः ॥ ५४ विहा १विशा२पचि३भिद्या४ऽऽदेः केलिमः, स्वर्गः १ चन्द्रस्वर्गौ २ अर्काग्न्यश्वाः ३ तस्करः ४॥५५ दो डिमः, दाडिमः॥ ५६ डिमेः कित्, सौत्रः॥५७स्थाछामासासूमन्यनिकनिपासिपलिकलिशलिशकीर्ष्यिसहिवन्धिभ्योः यः, स्थायः स्थानं, सव्यो वामो दक्षिणश्च, मन्या धमनिः ॥ ५८

नञो हलिपतेः ॥ ५९ संजेर्धं च ॥ ६० मृशीपसिवस्यनिभ्य-स्तादिः, शेत्योऽदेऽजगरे खगे, पसि निवासे, पस्त्यं गृहं, वस्त्यो गुरुः ॥ ६१ ऋशीजनिपुणिकृतिभ्यः कित्, जन्यं संग्रामो, जाया पत्नी, कृत्या दुर्गा ॥ ६२ कुलेर्ड् च वा ॥ ६३ अगपुलाभ्यां स्तम्भेर्डित् ॥ ६४ शिक्याऽऽस्याऽऽढ्यमध्य-विंध्यधिष्ण्याघ्न्यहर्म्यसत्यनित्यादयः, धिष्ण्यं गृहमासनं च, धिष्ण्योल्का, अघ्न्यो धर्मो गोपतिश्च ॥ ६५ कुगुवलिमलि-कणितन्याम्यक्षेरयः, आमयो रोगे ॥ ६६ चायः केकू च ॥ ६७ लादिभ्यः कित् ॥ ६८ कसेरलादिरिचास्य ॥ ६९ वृङः शषौ चान्तौ, वृशयं नभ आसनं शयनं च, वृषय आशयः ॥ ७० गयहृदयादयः ॥ ७१ मुचेर्घयघुयौ, मुकुयः ॥ ७२ कुलिलुलिकलिकषिभ्यः कायः ॥ ७३ श्रुदक्षिगृहिस्पृहिमहे-राय्यः, दक्षाय्योऽग्निर्गृध्रो गरुत्मांश्च, महाय्योऽश्वमेधः ॥ ७४ दधिषाय्यदीधिषाय्यौ, मृषाव्रादिनौ ॥ ७५ कौतेरियः, कवियः खलीनः ॥ ७६ कृगः कित्, क्रियो मेषः ॥ ७७ मृजे-र्णालियः, मार्जालीयं ॥ ७८ वेतेस्तादिः, वैतालीयं ॥ ७९ धाग्राजिगॄरमियाज्यर्तेरन्यः, जयन्यं रमण्यं, अरण्यं वनं ॥ ८० हिरण्यपर्जन्यादयः ॥ ८१ वदिसहिभ्यामान्यः, वदा-न्यो गुणवान्दाता चारुभाषी च, सहान्यः शैलः ॥ ८२ वृङ एण्यः ॥ ८३ मदेः स्यः ॥ ८४ रुचिभुजिभ्यां किष्यः, रुचिष्यौ स्वर्णवल्लभौ, भुजिष्य आचार्यो मृदुर्दास ओदनश्च, भुजिष्यं वनं ॥ ८५ वच्यर्थिभ्यामुष्यः ॥ ८६ वचोऽथ्य उत् च, उतथ्यः ॥ ८७ भीवृधिरुधिवज्यगिरमिवमिवपिजपि-शकिस्फायिवन्दीन्दिपदिमदिमंदिचंदिदसिघसिनसिह--स्यसिवासिदहिसहिभ्यो रः, भेरो भेदे शरे उष्ट्रे, दुंदुभौ भेककातरे, वध्रौ चंद्रमेघौ, जप्रौ द्विजभेकौ, वंद्रा वंदी केतुः कामश्च, वंद्रं समूहः, मंद्रं गभीरं, दस्रः शिशिरं चंद्रो ज्येष्ठश्च, असमश्रु, वास्रो ना शरभो रासभः पक्षी च, वास्रा धेनुः,

दढाः सूर्याग्निवालकाः, सद्रः शैलः ॥ ८८ ऋज्यजिताश्विचंचि-
रिपिसृपितृपिद्दपिचुपिक्षिपिक्षुपिक्षुदिक्षुदिरुदिच्छिदिभि-
द्रिग्विग्रुंदिदंभिशुभ्युंभिदंशिचिसिवहिविसिवसिशुचि –
सिधिगृभिर्वीधिश्विंतिवृतिनीशीसुसूभ्यः कित्, ऋज्रा
इन्द्रार्थनायकाः, वीरः, वक्रोऽनुजौ हरौ कुजे, रिप्रं कुत्सितं,
सृप्रश्चंद्रः, तृप्रमाज्यं काष्टं पापं दुःखं च, दृप्रा बुद्धिः, चुप्रो वायुः,
क्षुपिः सादने स्फोटने च, क्षुप्रं तुहिनं, खिद्रं विघ्नं, खिद्रश्चंद्रो
दीनो विपाणश्च, दभ्रोऽल्पे कुशले सूर्ये, उभ्रो मेघे च पेलवे,
दभ्रो भुजंगमे दन्ते, उद्रो वृषभः, उस्रो रश्मिः, उस्रा गौः, सिध्रौ
साधुवृक्षौ, वीध्रोऽग्नौ निर्मले वायौ पूर्णंदौ खे च मंडले, वृत्रं
पापं, शीरोऽजगरः, सूरः सूर्यो रश्मिः ॥ ८९ इणधाग्भ्यां वा,
एरा एडका, इरा मेदिनी, धीरो, धारा ॥ ९० चुंबिकुंबितुंबेर्न-
लुक् च ॥ ९१ भंदेर्वा ॥ ९२ च्विजिशुपिभितम्यरम्यर्देर्दी-
र्घश्च, जीरो वातेऽनले सप्तौ, जीरमन्नं, मीरोऽर्णवे, जलं मीरं ॥

९३ चकिरमिविकसेरुचास्य, चुक्र आम्लरसेऽसुरे, रुम्रो रम्ये
द्विजे नाशे, विकुसो वारिधौ चन्द्रे ॥ ९४ शदेरूच । ९५ कृतेः
कृकृच्छौ च ॥ ९६ खुरक्षुरदूरगौरविप्रकुप्रश्वभ्राभ्रधूभ्रांध्र-
रंध्रशिलिंध्रोण्ड्रपुंड्रतीव्रनोव्रशीघ्रोग्रतुग्रभुग्रानिद्रातंद्रासां-
द्रगुंद्रारिभ्रादयः, तुग्रं शृंगं, भुग्रं रश्मिसमूहः, रिज्रो नायकः ॥
९७ ऋच्छिचटिवटिकुटिकठिवठिमव्यडिशीकृशीभृकादि-
वदिकंदिमंदिसुंदिमंथिमांजिपंजिपिंजिकमिसामिचामिव–
मिभ्रम्यभिदेचिवासिकास्यर्तिजीविवर्विकुशुदोररः, ऋच्छरा
कुलटा त्वराऽगुलिश्च, कठरो दुःस्थः, मठरोऽज्ञानी गोत्रमलसश्च,
कंदरो गिरिगर्तः, सुंदि शोभायां, मंथरो मंदखर्वयोः, कमरः कार्मुकेऽ-
ज्ञे वरे चौरे, वमरो दुर्मेधाः, वासरोऽग्नौ दिने कामे, अररं बुधे
गृहे हृतौ भृंगे ॥ ९८ अवेर्धं च वा ॥ ९९ सृद्युंदिपिठिकुरिकुहिभ्यः
कित्, चूर्णेऽतिकाये मृदरः ॥ ४०० शाखेरिदेतौ चातः ॥ ४०१
शपेः फ् च ॥ २ दमेर्णिद्वा दश्च डः, डामरो भयानकः । ३ जठर-

ककरमकरशंकरकर्परकूर्परतोमरपामरप्रामरप्राभ्ररसगर-
नगरतगरोदरादरश्रृदरहृदरकूदरकुकुंदरगोर्वरांबरमुखर-
खरडहरकुंजराजगरादयः, प्राभ्ररो नरपशुः, उदरो दुर्बलः,
रणेऽग्रे वक्षस्यदरं, विषे भये च हृदरं, वृक्षे कुसूले कूदरः, गोर्वरं
करीषः ॥ ४ मुदिगूरिभ्यां टिद् गजौ चांतौ, गुर्जरः सौराष्ट्रा-
दिः ॥ ५ अग्यंगिमदिमंदिकाडिकसिकासिमृजिकंजिक-
लिमलिकचिभ्य आरः, मदारौ क्रोडहस्तिनौ, कंजारो व्यंजने
यूपे, कलारो विषमरूपः, मलारोऽलसः ॥ ६ त्रः कादिः ॥ ७
कृगो मादिश्च ॥ ८ तुषिकुठिभ्यां कित् ॥ ९ कमेरत उच्च
॥ १० कनेः कोविदकर्बुदकांचनाश्च, वृक्षाः ॥ ११ द्वार-
श्रृंगारभृंगारकान्तारकेदारखारडादयः, खारी॥ १२ मदि-
मंदिचंदिपदिखदिसहिकुसृभ्यः, मंदिरं नगरे गृहे, चंदिरो
वारणे चंद्रे, पदिरो मार्गः, सरीरं जलं ॥ १३ शवशशो-
रिचातः ॥ १४ अंथेः शिथ् च ॥ १५ अशोर्णित्, आशिरो

माधवे सूर्ये ॥ १६ शुषीषिबन्धीरुधिरुचिचिमुचिमुहिमि-
हितिमिमुदिखिदिछिदिभिदिस्थाभ्यः कित् ,सेऽग्ये आवंध-
सीपिरः, मुचिरोऽम्रधर्मभानुषु, मिहिरः सूर्यमेघयोः मुदिरश्च,
मिदिरो भेदवज्रयोः ॥ १७ स्थविरपिठिरस्फिराजिरादयः,
अजिरं द्रंगांगणामरालये॥१८कृगॄपॄपूगॄमंजिकुटिकटिपटिकंडिगं-
डिशौंडिहिंसिभ्यः ईरः, परीरं बले हलाग्रे, पवीरं फलपूतयोः,
कटीरं जले, पटीरः कामः, शौंडीरो गर्विते तीक्ष्णे ॥ १९
घसिवशिपुटिकुरिकुलिकाभ्यः कित्, वर्षायां पयसि क्षीरं,
उशीरं, पुटीरः कूर्मः, कुरीरः कंबलः, कुलीरः कर्कटः, कीरः
शुके काश्मीरके ॥ २० कशेर्मोऽन्तश्च ॥ २१ वनिवपिभ्यां
णित् ॥ २० जंबीराभीरगभीरगंभीरकुंभीरभडीरभंडी-
रडिंडीरकिर्मीरादयः, किर्मीरं कर्बुरं ॥ २३ वाश्यसिवासि-
मसिमथ्युंदिमंदिचंदिचतिचंक्यंकिकविंचकिवंधिभ्य उरः,
वाशुरौ खरपक्षिणौ, वाशुरा रात्रिः, मसुरं चर्मासनं धान्यं च,

मसुरा पण्यस्त्री, चंकुरौ रथचंचलौ, चकुरो दशने ॥ २४ मंकेर्नलुक् वोच्चास्य ॥ २५ विधेः कित् ॥ २६ श्वशुरकुकुंदरदर्दुरनिचुरप्रचुरचिकुरकुकुरकुक्कुरकुर्कुरशर्कुरनूपुरनिष्ठुरविधुरमद्गुरवागुरादयः। २७ मीमसिपशिखटिखडिखर्जिकर्जिसर्जिकृपिवाह्लिमंडिभ्य ऊरः, पशूरो ग्रामः ॥ २८ महिकणिचण्यणिपल्यलितलिमलिशलिभ्यो णित्, शैलनागदैत्यग्रामपुरविशेषविटजलावर्त्तदानवदर्दुराः ॥ २९ स्थाविडेः कित्, स्थूरौ वठगोचौ, स्थूरा जंघाप्रदेशः ॥ ३० सिंदूरकच्चूरपत्तूरधुत्तूरादयः ॥ ३१ कुगुपातिकथिकुथिकठिकुठिकुटिगाडिगुडिमुदिस्त्रलिदंशिभ्यः,गुवेरं युद्धं, कथेरः कुहके खगे, कुठेरोऽर्जकः, कुटेरः शठः, मुदेरो मूर्खः, दशेरः सर्पः श्वा देशश्च ॥ ३२ शतेरादयः,वायुस्तुपारश्च॥ ३३ काठिचक्रिसह्भ्य ओरः, सहोरौ विष्णुपर्वतौ॥ ३४ कोरचोरकिशोरघोरह्नोरादोरादयः॥ ३५किशृवृभ्यः कर ॥ ३६ सुपुपिभ्यां कित्॥ ३७अनिकाभ्यां तरः, अंतरं छिद्रमध्यविरहविशेषेषु ॥ ३८ इणपूभ्यां कित् ॥ ३९ मीज्यजिमामव्यशौवसिकिभ्यः सरः, वेशरोऽश्वतरः, मासर आयामः, वर्णे शिवेऽम्बरेऽक्षरं, वत्सरः ॥ ४० कृधूतन्यृपिभ्यः कित्, तसरः कौशेयसूत्रं, ऋक्षरः कंटक ऋत्विक् च, ऋक्षरा तोयधारा ॥ ४१ कृगृशृदृवृग्चातिखटिकटिनिषदिभ्यो वरट्, कर्वरी भूः शिवा च, कर्वरो व्याघ्रो विष्किरोऽजलिश्च, गर्वरौ मदमहिषौ, शर्वरा रुद्रमायाह्वहिंसकाः, ध्वान्ते धान्ये च शार्वरं, दर्वरं वज्रं, वर्वरः चंदने लुब्धके कामे, कद्वरो व्यालाश्वः, निपद्वरः पंक इन्द्रे स्मरे दासे, स्त्रियां-रात्रौ शच्यां पूपास्त्रियोः ॥ ४२ अश्नोतेरीच्चादे ॥ ४३ नीमीकुतुचेर्दीर्घश्च, पुरुषकारे नीवारो, हिंसे जलधौ च मीवरः, कूवरो रथावयवः, तूवरो मंदश्मश्रु, चीवरो निस्सारं कन्था च ॥ ४४ तीवरधीवरपीवरछित्वरछत्वरगह्वरोपह्वरसंयद्वरोदुंवरादयः, तीवरो व्यंजनेऽम्बुनि, छित्वरः जर्जरे

